आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७६ ।





दिगम्बरानुचरविरचितार्थप्रकाशिकाख्यव्याख्यासमेताः

# ईशकेनकठोपनिषदः

# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।



ग्रन्थाङ्कः ७६



दिगम्बरानुचरविरचितार्थप्रकाशाख्यव्याख्यासमेताः

# ईशकेनकठोपनिषदः



एतत्पुस्तकम् ।

डेक्कनकालेजस्थसंस्कृताध्यापकैः वे० शा० रा०
पाठकोपाह्वैः श्रीधरशास्त्रिभिः आनन्दाश्रमस्थ-
पण्डितैश्च संशोधितम् ।

तच्च

## हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३६

खिस्ताब्दाः १९१५



मूल्यमेको रूपकः ( १ )

ॐ तत्सद्ब्रह्मणे नमः ।

# अर्थप्रकाशसहितेशावास्योपनिषत् ।

अथ यजुषां वाजसनेयशाखायां ज्ञानस्य तत्साधनस्य चोपपादका ईशावास्यमित्यादयोऽष्टादश मन्त्राः सन्ति तेषामधुनाऽर्थः प्रकाश्यते—

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥

इदं प्रत्यक्षत्वेनानुभूयमानं सर्वं नामरूपकर्मात्म जगत्यां जङ्गम्यत इति जगती तस्यां जगत्यां तदुपलक्षितेऽस्मिँल्लोकत्रयेऽपि यत्किंच स्थूलसूक्ष्मात्मकं जगत्तदीशेष्ट इतीट् तेनेशा सत्याद्वितीयानन्तपरिपूर्णलक्षणैश्वर्यवता चिदानन्दमयेन शुद्धेन परमात्मना वास्यमाच्छादनीयम् । कुतः, जगतोऽनिर्वचनीयत्वेन विवर्तरूपत्वादस्य कारणत्वात्सत्तारूपत्वाच्च रविरश्मिसंघैर्मृगजलमिव तस्मात्तेन सह तदेवैकमस्त्यत एवोच्यते 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' ब्रह्मैवेदं विश्वमिदं वरिष्ठमिति । अतो विवेकिभिरन्वयेनेदं सर्वं तद्रूपमेव दृश्येत तेनैवंरूपेण त्यक्तेन त्यागेन भुञ्जीथा भुङ्क्ष्व विषयान् । तत्कथम् । पूर्वमज्ञानावस्थायां देहात्मबुद्धिः सत्या तथाच स्त्रीपुत्रादिषु ममता न त्यागो मरणेन वा परित्यागो न संभवति वासनारूपत्वेन विद्यमानत्वात् । तस्मिन्यथावद्वर्तमानेऽप्युक्तविवेकेन सर्वं ब्रह्मैवास्तीति समत्वभावनया योऽहंममत्वपरित्यागः स एव परिज्ञानतः परित्यागस्तेन त्यागेनान्वयज्ञानरूपेण शब्दादिविषयान्भुञ्जीत । कथं तदन्वयज्ञानं शब्दोऽयं विषयः कुत उत्पन्नः किं तस्य रूपमिति विवेचनेन केवलाद्दन्तोष्ठतालुजिह्वादेर्वाचैतन्यरूपत्वात्तस्य पूर्वभावे संकल्परूपस्य तस्य वक्तैव मूलं रूपं च । वक्ता स विचारतः शुद्धेन रूपेण परं ब्रह्मैवास्ति स यदा शब्दाकारेण तदा कारणान्वयेन शब्दोऽपि तद्रूप एव । तस्माद्ब्रह्मण उत्पन्नो ब्रह्मरूपशब्द आकाशमार्गेणाऽऽगतः सोऽपि विचारतो ब्रह्मैवास्मिन्नेव गुणदृष्ट्या तस्याऽऽभासमानत्वादपृथक्सिद्धत्वात् । अत एवोक्तम् ' आकाशशरीरं ब्रह्म य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याऽऽ-

काशः शरीरं य आकाशमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः ’ इति । कथं च विना मध्यगतसत्तां तदागमनं संभवेत्तस्मान्मध्येऽपि तद्रूपेण तदेवैकं विज्ञेयम् । तथा येन तस्य श्रवणं यश्च श्रोता तद्ब्रह्मैव सत्यं, कथं, यः सात्त्विकः कर्ता स एव रजसा करणरूपो न तयोः स्वरूपभेदोऽस्ति । अत एवोक्तं ‘ स प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव ’ इति । श्रोता स व्यतिरेकवृत्त्या विचारतः परं ब्रह्मैव । तथा चोक्तम् ‘ अयमात्मा ब्रह्म ’ इति । यत्परं ब्रह्म तदेव गुणसाम्यभूतचित्प्रकृतियोगात्तद्गुणप्रधानत्वेन त्रिपुटीरूपेणेति पञ्चीकरणप्रकारेण विज्ञायते । तस्मात्तत्सर्वमपि परं ब्रह्मैव । एवं सर्वस्यापि कारणमधिष्ठानं परं ब्रह्मैवैकं सर्वत्र तन्मधुब्राह्मणोक्तं विज्ञातव्यम् । यथा जलादुत्पन्नस्तरङ्गादिर्जलरूपस्तदाधारेणैव विहरत्यन्ते तत्रैवावसीयत इत्येवं विज्ञाय यो विषयभोगः क्रियते स त्यागरूप एव संभवति । तदेवोक्तं भगवता–

‘ ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ’ ॥ १ ॥ इति ।

तस्मात्तेन त्यक्तेन भुञ्जीथा इत्युच्यते । तदेव परमं मोक्षसाधनमिति विज्ञातव्यम् । यस्मादेवं तस्मादहंममतायोगेन भोगापेक्षया कस्यस्वित्कस्यापि धनं भोगसाधनभूतं मा गृधो मा गार्ध्यमाकाङ्क्षां कार्षीः । यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरो भवेत्तेनैव त्यागसिद्धिरस्ति ॥ १ ॥

एवं यदा तदा यत्नतः कर्माचरणेन किं प्रयोजनं त्यागेन स्वभावतः सुखमासितव्यमिति प्राप्तं तत्राऽऽह–

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

इहास्मिँल्लोके कर्माणि विहितान्यग्निहोत्रादीनि कुर्वन्नेव यथाकालं निर्वर्तयन्नेव शतं शतसंख्याकाः समाः संवत्सराञ्जिजीविषेज्जीवितुमिच्छेत् । एवमेवंविधे बाह्यभावेन विहितकर्माचरणशीलेऽन्तस्तूक्तप्रकारेण ब्रह्मात्मभावनयाऽहंममत्वपरित्यागवति त्वयि नर इतोऽस्माज्ज्ञानोक्तकर्माचरणप्रकारादन्यथाऽन्यप्रकारो नाऽस्ति । अत एवमाचरणवति त्वयि न कर्म लिप्यते लिप्तं भवति न कर्मलेपोऽस्ति । ननु कर्म विहितं

तत्स्वर्गस्य प्रापकं तत्सुकृतक्षयेण पुनरस्य लोकस्येहामुत्र च स्थितभोग-वासनाभिवृद्ध्या संसारस्यैव जनकमतस्तद्वादिनां निन्दाऽपि बहुधोच्यते ।

'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥
अविद्यायामन्तरे वर्तमानाः स्वयंधीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥
अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति' ॥ इति ।

तथा तत्त्यागेनामृतत्वं च 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति । एवं सति कथमत्र तद्यावज्जीवं कर्तव्यमित्युच्यते, सत्यं, तेनैव मोक्षप्राप्तिरिति च श्रूयते—

'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
नच संन्यसनादेव सिद्धिं समधिगच्छति' ॥
'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ।

इत्यनेकैर्वाक्यैस्तस्मादत्र विचारणीयमस्ति नैक एव पक्षोऽङ्गीकर्तुं शक्य इतरस्याप्रामाण्यप्रसङ्गात् । अथात्र कथं स विचार इति चेत्स भगवता विस्तरशः कृत एव श्रूयते—

'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे' ॥

एवं पक्षद्वयश्रवणेन संशयाभिवृद्धौ तदपनोदनाय स्वमतं प्राहाग्रे—

'निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥
यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' ॥

ननु त्यागं विवक्षता कथं कर्मैव कर्तव्यमित्युक्तमिति चेत्तत्र स्वाभिमतत्यागरूपं पृथगेवाऽऽह—

'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' ॥

एवं समग्राणि कर्माणि विधाय तत्र सङ्गफलत्याग एव तत्त्यागो विज्ञेयो न स्वरूपेण कार्यः । कुत इति चेत्,

‘ नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ’ ॥

तथा कृतश्चेत्त्यागः—

‘ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ’ ॥

कथम्, कर्माभावे चित्तशुद्ध्यभावस्तदभावे रजस्तमोगुणयुक्तः संन्यासी न स संन्यासी तद्धर्माभावात्तेन कुतो मोक्षस्तस्मात्स्वरूपतः कृते कर्मत्यागे न त्यागफलं मोक्षो लभ्यते । तस्मात्—

‘ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ’ ॥

तस्मादेवं यः कर्मफलत्यागी स त्यागीत्यभिधीयते । तस्यैव मोक्षो नेतरस्य तदेवोच्यते—

‘ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ’ ॥ इति ।

यस्मादेवं तस्माद्य उक्तः श्रूयते स काम्यस्यैव कर्मणो विज्ञेयस्तदेवेहामुत्र स्थितफलदानेन संसारस्य जनकं न निष्कामं तदेवोक्तम्—

‘ काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥’ इति ।

तथाऽन्यत्रापि च—

‘ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ’ ॥ इति ।

यत्र काम्यकर्मपरित्यागस्तत्र निषिद्धाचरणं कुतोऽतः काम्यकर्मपरित्यागेन यद्विहितं नित्यनैमित्तिकं कर्म तत्सङ्गफलत्यागयोगेनावश्यं कार्यमेवात एवोक्तमत्र—

‘ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ’ । इति ।

अथ कथं सङ्गफलत्यागलक्षणमिति चेत्, उक्तप्रकारेण सर्वं परब्रह्मरूपमेवेति निश्चित्य समताबुद्ध्याऽहंममत्वपरित्यागेन—

‘ कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ’ ॥

तथा ‘ गुणा गुणेषु वर्तन्त ’ इति मत्वा कृतेन कर्मणा न लिप्तो भवति । यद्वा,

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' ॥

इत्युक्तभावेनाप्यसङ्गत्वं संभवति तेन यथाधिकारमसङ्गतया कृतस्य कर्मणः फलं ब्रह्मार्पणभावेनेश्वरार्पणबुद्ध्या संत्यज्य ममत्वशून्यो भवेत्तेन न कर्म लिप्यते । ननु चेत्कर्म चित्तशुद्धेर्जनकत्वान्मोक्षसाधनं तर्हि मुमुक्षुभिरेव कर्तव्यं किं मुक्तैः । तैरपि कर्तव्यं लोकसंग्रहार्थम् । तदेवोक्तं भगवता–

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः' ॥ इति ।

तस्मान्मुक्तैरपि लोकसंग्रहार्थं कार्यमेव ॥ २ ॥

अथोक्तविधं मोक्षसाधनभूतं कर्म विहायान्यथाचरणशीलान्निन्दति–

**असुर्या नाम ते लोका अन्धेन तमसा वृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये केचाऽऽत्महनो जनाः॥ ३ ॥**

ते लोका लोक्यन्ते भुज्यन्ते कर्मफलान्यत्र ते लोका असुर्या असुराणां स्वपराहितरतानां स्वभूता असुर्या नाम संभाव्याः। येऽन्धेन गाढेन यत्र न किंचित्कदाचिदपि प्रकाशोपलब्धिस्तद्विधेन तमसाऽज्ञानलक्षणेन यत्र न कदाऽपि विस्फुलिङ्गप्रायेणापि मोक्षसाधनभूतविवेकोत्पत्तिस्तेन तमसा वृताः । ते असुर्या नाम लोकाः पुनःसंसारप्रदकेवलराजसयोनिरूपाः । तानसुर्याँल्लोकांस्ते प्रेत्य मृत्वाऽभिगच्छन्ति प्राप्नुवन्ति । ते के । ये के चाऽऽत्महन आत्मानं शुद्धबुद्धमुक्तसत्यस्वभावं घ्नन्ति नानाविधसांसारिकतिर्यग्योनिसंबन्धिदुःखयोगेन हिंसन्ति त आत्महनो जनास्ते तान्प्रेत्याभिगच्छन्ति । पुनः कथम् । स्वभावतोऽयं जीवोऽविद्याबन्धनेनाऽऽवृतो दुःखसागरे संसारे पतितोऽस्ति तद्गुणप्रधानत्वेन तद्बन्धनं दृढं कृत्वा पुनर्द्वितीयं कर्मबन्धनमापादयन्ति वर्तमानमपि

मोक्षोपायं नाऽऽचरन्त्यतस्ते कथं नाऽऽत्महनः । तत्कथं कर्मबन्धनमिति चेत्, कर्म तदेकमेव त्रिविधं संचितप्रारब्धक्रियमाणरूपेण । तत्र यत्क्रियते शुभं वाऽशुभं तत्क्रियमाणं, यत्तत्संगृहीतं तत्संचितं, यत्तस्माद्देहारम्भकं भोगायाऽऽरब्धं तत्प्रारब्धम् । यदेकांशेन भोगायाऽऽरब्धं तद्देहादनेकदेहारम्भकक्रियमाणोत्पत्तिस्तत्सर्वमपि संचितमेव भवति । एवमेकांशेन व्ययोऽनेकांशेन संग्रहः । एवं यावत्क्रियमाणं तावत्संचिताभिवृद्धिर्यावत्संचितं तावत्तस्य प्रारब्धत्वेन भोगो यावत्स तावत्पुनः क्रियमाणप्रवाहस्तेन संचितं तस्मात्पुनः प्रारब्धमिति कर्मशृङ्खलाबन्धनं तस्माद्यदा मुक्तिस्तदैव मोक्षः । कथं तस्मान्मुक्तिरिति चेत्, आदौ क्रियमाणान्मुक्तिस्ततः संचितात्ततः प्रारब्धात् । ननु—

‘ नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ’ ॥

इत्यादिवाक्यैः प्रत्यक्षत्वेनाप्ययं क्षणमप्यकर्तृत्वेन न तिष्ठति तदा कथं क्रियमाणकर्मविनाशो भवेत्तद्विनाशेनेतरयोरुक्तप्रकारेणेति चेत् । नाकरणेन तद्विनाश उच्यते तदपि कर्माकरणदोषजनकत्वात्कर्मैव तदा संचितारम्भकत्वेन भोगारम्भकं भवति तस्मान्न स उपायः स तु भिन्न एवास्ति तेन कृतमपि समग्रं कर्माकर्मरूपमेव भवति । कथम् ।

‘ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ ’

इत्येतद्वाक्योक्तप्रकारेण सङ्गफलत्यागेन कृतं कर्म तदकर्मरूपमेव सर्वं तेन कृतमप्यकृतमेव तेन संचिताभिवृद्धिहेतुक्रियमाणप्रवाहविनाशस्तदा तद्विनाशोऽपि विधातुं शक्यो वृद्ध्यभावात् । एवं यथा क्रियमाणाद्विमुक्तिस्तथा संचितादप्यस्ति । कथम् । तथाविधक्रियमाणकर्माचरणे फलं परमेश्वरेऽर्पितं तेन तदाराधनेन तत्प्रसन्नत्वयोगात्तथाविधभजनसत्सङ्गश्रवणतीर्थक्षेत्रसेवनात्संचितस्य विनाशः शनैः शनैः संभवति । शेषमात्रेऽवस्थिते तस्मिन्प्रारब्धरूपेण भोगायाऽऽगते विवेकोत्कर्षाज्ज्ञान आस्था तया सद्गुरुसेवने प्रीतिस्तत्कृपया विज्ञानसंप्राप्तिस्तेन सर्वबन्धनाद्विमुक्तस्य मोक्षसंप्राप्तिः । एवमतिसुकरोपायं परमात्मना निर्मितं श्रुत्वाऽपि न तत्र मतिं विधत्ते मोक्षोपायवासनां बलाद्विहायोक्तप्रकारेण दुर्मोचबन्धनापादके कर्मण्येव मतिं कुरुते तेनाऽऽत्म-

बन्धनस्याऽऽत्मैव मूलं स्विदन्यत् । केवलमोक्षवासनां हित्वा सांसारिककर्मनिरतास्ते जना आत्महनः सत्यं तेऽसुर्यान्नाम लोकानन्धेन तमसाऽऽवृतान्प्रेत्याभिगच्छन्तीति विज्ञेयम् ॥ ३ ॥

उक्तपूर्वं सर्वस्य ब्रह्मभावमविज्ञाय तथा विहितकर्माचरणमकृत्वा संसारतोपरतान्काम्यकर्मिणो निन्दित्वा पुनस्तथाभाविनः स्तवनाय तदक्षरं ब्रह्म स्तूयते—

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

अनेजन्नेजत्यनेजदकम्पमानं सर्वदा निश्चलं चलनं तु किंचिन्निमित्तयोगादवकाशे परिच्छिन्नस्य संभवति तत्त्वेकमद्वितीयमुच्यते च ‘ नेह नानाऽस्ति किंचन ’ इति । ननु तदा किमुपक्रमोपसंहारयोः कारणं लयविक्षेपयोश्च । मायाविद्ये उच्येत । तदा कथं तदेकत्वं तेन सह विज्ञातव्यं तच्च कथं यन्मायाविद्यारूपं तदनिर्वचनीयत्वाद्विवर्तरूपं स्वाधिष्ठानसत्तयाऽन्यथा पृथक्त्वेनैवाऽऽभासते रविरश्मिसङ्गे मृगतोयाभासवदतोऽधिष्ठानदृष्ट्या न तस्य भानमप्येवंविधेनाताविकेनान्यथाभासेन कथं ब्रह्मणोऽद्वितीयत्वहानिः स्यात्तस्मात्तेन सहापि तदेवैकं सत्यमत एवोच्यते ‘ एकमेवाद्वितीयं ब्रह्म ’ इति । ननु कथं विवर्तस्य निमित्तत्वं संभवेत्, नेदं निमित्तवन्निमित्तं तथोपादानमपि परं ब्रह्म नोपादानवदुपादानं कार्यस्य विवर्तरूपत्वात् । तस्याधिष्ठानसत्तयैवान्यथात्वेन भानं भाति तदपृथक् सिद्धं विचारतस्तत्र तदेवैकं सत्यं घटेषु मृदिव तस्मात्तदुपादानत्वेनोच्यते न वस्तुतो दण्डचक्रादिपृथङ्निमित्तयोगान्मृद इव न कार्याकारेण संभवनमस्ति तस्मान्नोपादानवदुपादानमपि वक्तुं शक्यम् । तेन सहापि निजाकारेण यथावदेवात एकम् । मनसो जवीयो वेगवत्तरं सर्वापेक्षया वायुर्जवीयांस्तस्मादपि मनस्ततोऽपि यज्जवीयश्चञ्चलम् । विरुद्धं तु, न, इदमौपाधिकं विज्ञातव्यं, कथम्, मनःप्रभृतिषु यत्सत्तारूपं येन तच्चञ्चलत्वं तस्मात्तथोच्यते । यतो मनस्त्वस्य कारणं तदन्तर्वर्ति तस्मादेनदेतद्देवा ज्ञानप्रकाशेन द्योतमाना मनःप्रभृतितत्त्वरूपा नाऽऽप्नुवन्नाऽऽप्नुवन्ति न तैर्गृह्यते । अत एवोच्यते, ‘ यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरम्’ ‘अगृह्यो न हि गृह्यते ’ ‘न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ’ इति । ननु तदनुभवस्त्वस्त्येव तथैवोच्यते, ‘ एत-

ज्ञानाथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् । ब्रह्मविदाप्नोति परम् ' इति । तदा येन ज्ञायते किं तच्चक्षुरादिनिराकरणं कृत्वोच्यते । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्, ' इति प्रज्ञानेनैव केवलेनानुभवोऽस्ति । ननु तदपि निराकृतं श्रूयते तु 'यः प्रज्ञाने तिष्ठन्प्रज्ञानादन्तरो यं प्रज्ञानं न वेद ' इति । सत्यं तर्हि किं तत्प्रज्ञानं येनाऽऽत्माऽग्राह्यो यच्छुद्धसत्त्वगुणप्रधानं यत्र ज्ञाता ज्ञानं ज्ञेयमिति भावस्तेन प्रज्ञानेन कथमात्मा ज्ञेयः स्याद्यत्तेन ज्ञायते तज्ज्ञेयमेव कथमात्मा भवेत्पुनस्तस्य ज्ञाने ज्ञानावलम्बनेनानवस्थाप्रसङ्ग एव । अतस्तद्भावपरित्यागेन सर्वगुणसङ्गमुक्तं सत्प्रज्ञानं निर्विकारतया स्वाश्रये तदाकारत्वेन संक्रामति तदात्मन्यात्मत्वेनाऽऽत्मानुभवो भवति । ननु तदात्मनैवाऽऽत्मानुभव इत्येव किं नोच्ये( च्य )ते किं प्रज्ञानेनेति । न केवलेन तन्निरासेनातस्तथोच्यते । ननु तत्राविद्यमानैर्मनःप्रभृतिभिः कथं तदनुभवः कथ्यते । तत्प्रज्ञानान्वयेन । येन सर्वगुणोपसंग्रसनान्निर्विकल्पेन स्वरूपाकारेण प्रज्ञानेन स्वसंवेद्यतया परब्रह्मानुभवस्तदेव प्रज्ञानं पुनर्निरस्ततत्त्वाद्याकारेण संभवत्यत एवोच्यते ' सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ' इति । एकमेव प्रज्ञानं गुणमुक्तत्वेन स्वरूपाकारं भवति गुणयोगेन तत्त्वाकारं भूत्वा प्रपञ्चं प्रकाशयति तस्मान्नैनद्देवा आप्नुवन्ति । तदा नैव तेषु तत्परिच्छिन्नं स्यादत उच्यते पूर्वं प्रागेव तत्त्वोत्पत्तेरर्षद्गतं तद्व्यापित्वेन तत्र वर्तमानम् । यथा घटादिकार्येषूत्पद्यमानेषु पूर्वमेव व्योम तत्र व्यापित्वेन वर्तते तथा यद्यत्तत्त्वमुत्पद्यते तत्र तत्र सत्तारूपत्वेन यदेव वर्तमानम् । तदाऽन्तरेव स्यान्न बहिरिति चेत्तत्त्वं धावतः शीघ्रं गच्छतोऽन्यानत्येत्यतीत्य गच्छति तदग्रेऽपि वर्तते चलनाक्रियां कुर्वन्नु तिष्ठद्यथावत्स्वस्थमेव सद्गगनवद्भावतोऽन्यानत्येति । पुनः कथं तत्तस्मिन्स्वरूपे मातरिश्वा मातर्यन्तरिक्षे श्वयति मातरिश्वा वायुरपो मेघरूपा दधाति । ननु किं तदाकाशमेव न तस्मिन्नेव तद्व्यापकत्वेन वर्तमानं तद्वत्किं न दृश्यत इति चेत्तस्मादपि सूक्ष्मत्वाद्देवैर्नाऽऽप्यत इत्युक्तमेव । ननु सर्वापेक्षया गगनमेव सूक्ष्मत्वेनावगम्यते तस्मादपि सूक्ष्मं तत्कथं सत्यं पञ्चसु भूतेषु गगनं सूक्ष्मं तदपि दृश्यते सूक्ष्मत्वेनासङ्गत्वेन व्यापकत्वेन च तद्गता सर्वव्योमरूपप्रकाशिनी लोकदृष्टिर्न दृश्यते कैश्चित्तेन तस्मादपि सूक्ष्मतरा साऽपि यस्य ज्ञेया नतु योऽनया स द्रष्टाऽऽत्माऽतिसूक्ष्मस्तस्मिन्नपि

यत्सत्तारूपेण वर्तते न येन ज्ञातुमर्हं तत्सूक्ष्मत्वं केनोपमेयम्। अत एवोच्यते, ‘अणोरणीयान्’ इति व्यापकत्वेन च ‘महतो महीयान्’ इत्यपि। अतस्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

व्यापकत्वेन व्याप्यप्रसङ्गाद्भेदावाप्तिः स्यादत आह—

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ॥
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

यदेजति चलति तत्तदेव तस्यापृथक्सिद्धत्वात्। तन्नैजति यन्नैजति स्थिरतरं तदपि तदेव। तद्दूरे यद्दूरे वर्तते तदपि तदेव। तदु तदेवान्तिके यदन्तिके वर्तते तदपि तदेव। अन्तर्यामित्वेनान्यत्स्यात्। अस्य सर्वस्योक्तस्यान्तर्यामित्वेनापि तदेव। बहिर्व्यापकत्वेन भिन्नं स्यात्। तदु तदेवास्य सर्वस्य बाह्यतो बाह्यभागेऽपि। तस्मात्सर्वं खल्विदं ब्रह्मैवास्तीति सत्यम् ॥ ५ ॥

यस्मादेवं तस्मात्—

यस्तु सर्वाणि भूतान्यात्मन्येवानु पश्यति।
सर्वभूतेषु चाऽऽत्मानं ततो न विचिकित्सति॥ ६ ॥

यस्तु पुमानधिकारी सर्वाणि ब्रह्मादीनि भूतान्यात्मन्येवानुपश्यति। तेषु च सर्वभूतेष्वात्मानमनुपश्यति। ततः स यथार्थदर्शी न विचिकित्सति न विचिकित्सां संशयं प्राप्नोति। स क आत्मा कथं च तस्मिन्सर्वभूतदर्शनं सर्वभूतेषु चाऽऽत्मनः। आत्मत्वेन प्रतीयमानोऽप्ययं देहो नाऽऽत्मा भवति वस्तुतो भूतपञ्चकात्मकत्वेन जडत्वाद्दृश्यत्वाच्च। तथा योऽस्यान्तःप्रज्ञानवान्द्रष्टा श्रोता मन्ता तत्त्वात्मकलिङ्गरूपः सोऽपि नाऽऽत्मा मुख्यत्वेन तत्त्वानां वृत्तिरूपत्वाद्विलक्षणधर्मसाक्षित्वाच्च। तथा नाऽऽत्माऽज्ञानं कारणशरीरमपि स्वप्रकृतितमोगुणकार्यरूपत्वात्। तथा प्रज्ञानरूपं महाकारणदेहमपि नाऽऽत्मा तदाश्रयस्वरूपत्वात्। देहचतुष्टयातीतत्वेन स्वभावादवस्थाचतुष्टयाद्यतीतः। एवं सकार्यगुणनिरासेन यच्छेषं शुद्धप्रकृतिरूपं गुणसाम्यभूतं ज्ञप्तिमात्रस्वरूपं तदपि नाऽऽत्मा भवति स्वगतभेदरूपत्वात्। यत्तस्याधिष्ठानं निरुपाधि शुद्धं बुद्धं निराकारं निर्विकारं सर्वगतं परिपूर्णं सन्मात्रं शेषं तदेव वेदाचार्यात्मप्रत्ययेनाऽऽत्मरूपं तत्त्वतः। तस्मिन्नात्मनि सत्तारूपे सर्वाणि भूतानि योऽनुपश्यति नाऽऽधे-

याधिष्ठानभावेन तेषामौपाधिकत्वादात्मौपम्येनोक्तत्वाद्व्यतिरेकवृत्त्या तद्रूपाण्येवेति । ततो गुणदृष्ट्या पुनराभासमानेषु भूतेष्वात्मानमन्वयज्ञानेन तानि सर्वाण्यात्मरूपाण्येवेत्यनुपश्यति । कथं तदन्वयज्ञानम् । यन्निर्विकल्पं ज्ञप्तिरूपं तद्ब्रह्मैव स्वगतभेदरूपत्वाद्यथा पयोवर्णो रत्नज्योतिस्तदपृथक्सिद्धत्वेन तदेव तथोच्यते, 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति। यदा तदेव गुणसंबन्धात्प्रपञ्चाकारेण भवति तदाऽन्वयाद्ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । यद्वा सर्वमेतदनिर्वचनीयत्वाद्विवर्तरूपं सोऽधिष्ठानान्वयेन तत्सत्तया भासमानोऽपृथक्रूपोऽतस्तेन सह तदेवैकं सत्यम्, इत्यन्वयज्ञानेन सर्वभूतेषु चाऽऽत्मानं तानि सर्वाण्यात्मरूपाण्येवेत्यनुपश्यति ततो न विचिकित्सति । ननु यत्र व्यतिरेकस्तत्र नान्वयः संभवेत्तयोः परस्परविरोधादेवं सति कथमेकस्यैव वस्तुनोऽन्वयो व्यतिरेकश्चोपपाद्यते । सत्यमत एवेदमनुपमेयत्वेनोच्यते नास्यापृथक्सिद्धस्य पृथक्त्वेन निरासः संभवति चेत्तथा वाच्यस्तदा निरस्तस्यापुनःस्फुरणमेव स्यात् । समाधिस्थस्य स्थूलं निरस्तं स्विदनिरस्तमनिरस्तमिति तु न वाच्यं निरस्तमेव स निरासश्चेत्तथा वाच्यस्तदा तस्य शवत्वं प्राप्नुयान्न पुनरवलम्बो व्यवहारश्च तेन । तथा लिङ्गमपि न वक्तुं शक्यं चेत्तथा निरस्तं तदा कथं तेन ब्रह्मात्मानुभवकथनं समाधेश्च शब्दस्पर्शानुभवेन विक्षेपः संभवेत् । तथा कारणस्यापि निरासो वाच्यः कथं कारणनिरासे कार्यस्यावस्थानम् । चेन्महाकारणं तथा पृथक्त्वेन निरस्तं तदा को ज्ञानस्याऽऽश्रयः कथमन्यथा ज्ञानवृत्तिः सर्वकार्याभाव एव स्यात् । तस्मान्न देहचतुष्टयं निरस्तं तेन कुतोऽवस्थादीनामपि निरासः । विना तु निरासं न ब्रह्मात्मापरोक्षसाक्षात्कारः संभवेत्सोऽप्यनुभूयते पुनः स्फुरणं चातो न निरासवन्निरासो भिन्न एवास्ति। कथं, सजातीयस्यानुक्रमणं स्वगते तेन विजातीयस्याभानमेव स्वगतस्याधिष्ठानाकारत्वं तेन न सदसद्ग्रन्थिरूपस्य पुरुषत्वस्य भङ्गः प्रकृत्यवलम्बमुक्तत्वेन शुद्धेनाऽऽत्मना सन्मात्र एकजातीयत्वात्तन्मयत्वेनावस्थितिः स एव समाधिरित्युच्यते । पुनस्तदवलम्बयोगान्निद्रितः प्रबुद्ध इव बहिर्मुखत्वेन देहाद्यवलम्बं करोति तदा यथा पूर्वं सर्वप्रपञ्चभानं संभवति तथाऽन्वयेन सर्वभूतेषु चाऽऽत्मानमुक्तप्रकारेणानुपश्येत् ॥ ६ ॥

इत्यन्वयव्यतिरेकज्ञानयोगेन पुनः कथं स योगी तदाह—

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

यस्मिन्काले विजानत आचार्यप्रसादाच्छुद्धात्मतत्त्वमपरोक्षत्वेन विजानाति यस्तस्याऽऽत्मैव स शुद्धः सर्वाणि भूतान्यभूदुक्तविधान्वयज्ञानयोगेन भूतस्तत्र तस्मिन्काले को मोहः कः शोकस्तस्य शोकमोहाभाव एव । कथंभूतस्य विजानतः । एकत्वमनुपश्यतः, अत एवोक्तम् 'समलोष्टाश्मकाञ्चनः' इति । नन्वेवं कथं स्याज्जनकयाज्ञवल्क्यादयस्तु ब्रह्मनिष्ठा एव तेषां स्वराज्यादिव्यवहारकाले लोष्टाश्मकाञ्चनानि तथात्वेनैवाभासन्तान्यथा तु व्यवहाराभाव एव तदा तद्योगेन कथं न शोकमोहौ संभवेतां नान्यथा तत्पालनमेव स्यात् । सत्यं, न तेषां काञ्चनादीनां भानमेवाऽऽसीदिति न तथात्वेन भासमानेष्वपि सत्यत्वेन ब्रह्मभावनया समबुद्धिरासीत्तेन यावत्तेषां योगस्तावत्पालनं वियोगे नेतरेषामिव शोकः । एवं स्त्रीपुत्रादिष्वपि योगवियोगसंभवसुखदुःखादिभावरहितत्वेन वर्तमान इत्यर्थः ॥ ७ ॥

यस्मादभिन्नं सर्वं स कथं पुनः शुद्धात्मा तदुच्यते—

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

स शुद्धात्मा पर्यगात्परितोऽगाद्गतो व्योमवत्सर्वगतः । ननु सर्वगतं तद्व्योमैवैकं तदेव स इति किं नोच्येत । नच तच्छून्यरूपमेवायं तु पूर्णत्वेन श्रूयते 'पूर्णमदः' इत्यादिना । ननु यदा तत्पूर्णं सर्वगतं तदा कथं तत्र शून्यरूपस्य व्योम्नो भानं संभवेद्विरोधात् । यत्पूर्णं तदेव गुणदृष्ट्याऽवेक्षितं शून्यवत्प्रतीयते यथा स्वरूपेण संपूर्णोऽपि दर्पणो बाह्यदृष्ट्या शून्यत्वेनापि तद्वत् । ननु तत्र यच्छून्यत्वं तत्कल्पितमेव यत्पूर्णत्वं तदेव सिद्धमेवं चेदत्रापि शून्यरूपं व्योम तत्कल्पनामात्ररूपं तदा न मिथ्याभूतस्य तस्यावकाशप्रदानत्वं संभवेत्कथमियं विसृष्टिस्तत्र दृश्यते । सत्यं तथा दर्पणेऽपि किं न मुखादि दृश्यते तत्तु मिथ्यैव । इदमप्यनिर्वचनीयत्वाद्विवर्तरूपत्वेनैवोक्तमस्ति विवर्तस्य तु पूर्ण एव स्वाधिष्ठाने भानं संभवति न केवले शून्ये तस्मान्न विरोधो व्योमवत्सर्वगतमपि पूर्णं सलिलवत्तदे-

वोक्तं ' सलिल एको द्रष्टाऽद्वैतो भवति ' इति । पुनः कथं शुक्रं ज्योतिः शुद्धं शुक्ररूपस्वप्रकाशः । ननु यदा स्वप्रकाशः पूर्णश्च तदा किं न गोचरः । न परत्वेन गोचर आत्मन्यात्मत्वेन स्वप्रकाशत्वं पूर्णत्वं च तस्यानुभूयेते । किं न परत्वेनानुभव आत्मनो यत्परत्वेन ज्ञानं तदविद्यासंवलितं तेनान्यथाज्ञानरूपं यथाऽज्ञानपूर्वकं स्वप्रज्ञानं तेन यथार्थस्याभानमसदेव सत्यत्वेन विभाति तथोपाधिसंवलितेन ज्ञानेन तद्यथार्थवस्त्वविज्ञानेनासदेवेदं सत्यत्वेनाऽऽभासतेऽत एवोक्तं ' तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ' इति । एवमपि कायवान्भवेदित्यत्र शुक्रविशेषणेनाऽऽह— अकायं न विद्यमानः कायो देहो यस्य तदनन्तं देहाभावे तद्भावान्निराकरोति अव्रणमक्षतमस्राविरं न विद्यमानः स्रावाऽस्य तदपापविद्धं संसारप्रदत्वात्पुण्यापुण्ये अपि पापरूपे एव तेन पापेन न विद्धं तत्फलभोगशून्यम् । ननु तदेवोपाधिसंबन्धाद्देहचतुष्टयवद्भूत्वा तद्धर्मवशत्वेन पुण्यपापकर्माचरणयोगान्नानाविधफलभागपि भवतीति श्रूयते नु (तु) ' काममयोऽयं पुरुषो यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते, स वा अयमात्मा ब्रह्म, विज्ञानमयो मनोमयः स यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ' इति । तस्मात्तत्कथमकायत्वादिविशेषणैरुच्यते तद्विना कस्यान्यस्य देहो वाच्योऽन्यस्योच्यमाने कथं ' योऽहमस्मि ब्रह्माहमस्मि तत्त्वमसि ' इत्यादिवाक्यनिर्वाहः स्यात्सत्यं तथाऽपि सोपाधि सर्वं तात्त्विकं स्विदतात्त्विकं न तात्त्विकमिति वक्तुं शक्यमनिर्वचनीयत्वाद्विवर्तरूपमेव तदा कथं तेनाधिष्ठानस्यान्यथात्वं संभवेत्तद्दृष्ट्या विवर्तस्याभानमेवास्ति तत्तु निजाकारेण यथावदेव शुद्धबुद्धमुक्तसत्यस्वभावमतस्तत्स्वरूपेणोक्तविशेषणवदेवेति सत्यम्, एवंविशेषणविशिष्टशुक्ररूपः स कारणोपाधियोगात्कथमवगम्यते तदाह—कविः क्रान्तदर्शी सर्वज्ञत्वान्मनीषी मनस ईषयिता गमयिता नियन्ता नित्यमुक्तत्वात् । परिभूः परितोऽस्ति परिभूर्व्यापकः स्वयंभूः स्वयमेवाऽऽत्मनैवास्ति स्वयंभूः सर्वाधारभूतत्वात् । याथातथ्यतो यथातथाभावो याथातथ्यं तेन याथातथ्यतो यथार्हमर्थान्फलरूपाञ्छाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सरेभ्यः शाश्वतीः समाः प्राप्तुं येषां शाश्वत्यः समास्तेभ्यो व्यदधाद्विहितवान् ॥ ८ ॥

एवमन्वयव्यतिरेकज्ञानयोगेन शुद्धात्मतत्त्वोपासनापरस्य शोकमोहाद्यतीतत्वं फलमुक्तमधुना तन्मार्गं हित्वा केवलसंसारसाधनरतानां गतिमाह—

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूय इव ते तमो य उ संभूत्याꣳ रताः ॥ ९ ॥

ये संसारिणो जना असंभूतिं संभूयतेऽभीष्टं प्राप्यतेऽनया सा संभूतिरीशाराधनेनाविनाशि पदमवाप्यते ततस्तत्संभूतिः । उक्तं च—

'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यादि ॥

तदन्याऽसंभूतिरनित्यस्वर्गप्रापककर्ममार्गेण नानादेवताराधनमसंभूतिस्तामुपासते कर्मैव सर्वं श्रेय इति मत्वा केवलतदाचरणशीलास्तेऽन्धमन्धयत्यन्धं गाढं तमो न यत्राऽऽत्मानात्मकर्तव्याकर्तव्यविवेकस्तत्प्रविशन्ति तेनाऽऽवृताः सन्तो जन्ममरणभाजो भवन्ति । श्रूयते चान्यत्र—'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म' इत्यादि । किंच य उ निश्चयेन संभूत्यामीशाराधने रतास्तदेकाचरणशीलास्ते ततस्तस्मादपि भूय इव बहुतरमिव तमः प्रविशन्ति न तेषामपि परपदावाप्तिः । नन्वेतद्विरुद्धं नु, न, कथं नियते कर्मणि मतिमविधाय तत्त्यागेन कामनायोगेनोपासनापराणां कुतो वर्णाश्रमधर्मपालनं तदभावे कृतोपासना कुतः स्वफलदा तदा तेन कृतं तद्विकर्मरूपमेव सर्वं भवति । तदा कुतो निःश्रेयसाधिगमस्तस्मादुभयसाधनपरित्यागेन कथं न भूय इव तमःसंप्राप्तिस्तेषाम् ॥ ९ ॥

यस्मादेवं तस्मात्—

अन्यदेवाऽऽहुः संभवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

संभवात्संभूत्याः पूर्वोक्तायाः फलमन्यदेवाऽऽहुर्ब्रुवन्ति प्राज्ञा असंभवादसंभूतेः फलमन्यदेवाऽऽहुरिति धीराणां ज्ञानिनां वचः शुश्रुम श्रुतवन्तो वयम् । केषां ये धीरा नोऽस्मभ्यं तत्संभूत्यसंभूतिरूपं विचचक्षिरे व्याख्यातवन्तस्तेषाम् ॥ १० ॥

तदा किं तन्निःश्रेयससाधनमित्यत्रोच्यते-

संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते ॥ ११ ॥

संभूतिं च विनाशं चोक्तविधमसंभूतिरूपं तदेतद्द्व्यवयवात्मकं कर्म सहैकेन पुरुषेणानुष्ठेयत्वेन वेद जानाति स पुमान् विनाशेन विनाशरूपेण कर्मणा मृत्युं मृत्युप्रापकं संसारं तीर्त्वाऽतीत्य निवृत्ततद्भयः संभूत्योक्तविधेश्वराराधनरूपयाऽमृतममृतत्वं तत्प्रसादादश्नुते प्राप्नोति। कथमिति चेत्। निर्विण्णचेतसा मुमुक्षुणा केवलेन कर्मण्युपासनायां चाहंभावमुक्तेनाकर्मविकर्मत्यागात्काम्यमपि त्याज्यमेव । 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इत्युक्तत्वात् । यन्नियतं नित्यं नैमित्तिकं च तदावश्यकत्वेनाऽऽचरणीयमेव न तु त्याज्यम्। उक्तं च-'नियतस्य तु संन्यासः कर्मणो नोपपद्यते'। इत्यादिना। ननु तदन्धतमसस्य प्रापकं नु सत्यं, कर्तृत्वाभिनिवेशेन फलापेक्षया कृतं चेत्तथा नतु तत्त्यागतः। तन्मृत्योस्तरणसाधनमेवोच्यते च-'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति। कथमिति चेत्, सङ्गफलत्यागेन कृतं कर्माकर्मरूपमेव। उक्तं च-'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः' इति। अत एव तस्य विनष्टप्रायत्वाद्विनाशेनेत्युच्यते। एवं कृते स्वभावात्संचितवृद्ध्यभावः क्रियमाणप्रवाहावष्टम्भात्। अवशिष्टसंचितस्य भोगेनोपासनया च ध्वंसः । देहान्तरारम्भके तस्मिन्विनष्टे किमन्यत्संसृतिकारणं तदभावान्मृत्योस्तरणं स्वभावात्। ततः कथं संभूत्याऽमृतमश्नुते। संभूतिरीशाराधनं तद्द्विविधं कथं नियतमखिलं कर्म कृत्वाऽन्ते फलानां समर्पणमेकम्। उक्तं च-'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति । अन्यत्तदागमविधिना । एवं संभूत्याराधितभगवत्प्रसादात्सदाचार्यकृपया परविद्यां प्राप्यामृतत्वमश्नुतेऽतस्तथोक्तं तस्मान्न विना कर्म केवलोपासना मोक्षसाधनं विनाऽप्युपासनां कर्म। कर्मोपासनायुक्तमेव सिद्धिदमुपासनाऽपि कर्मयुक्ता सिद्धिकरी ॥ ११ ॥

एवं कर्मोपासनासंबन्धिन्यौ विद्ये अपि पृथक्त्वेन न मोक्षफलदे इत्याह—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥
ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ १२ ॥

ते जना अन्धं तमः प्रविशन्ति । के ये प्राकृता अविद्यामीशाराधनरूपा सा विद्या तदन्याऽविद्या कर्ममीमांसारूपा तामुपासते सैव श्रेष्ठेतिबुद्ध्या तस्यामेव निरताः । 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ कर्मण्यकर्म यः पश्येदकर्माणि च कर्म यः' । इत्यादिनोक्तविवेकहीनास्ते ततस्तस्मादपि भूय इव तमस्ते प्रविशन्ति । के य उ विद्यायामीशाराधनसाधनभूतायां रताः । यावन्न कर्माकर्मविषयं ज्ञानं तावत्कुतस्तेषां तस्य साङ्गमाचरणं विना तेन किं देवतोपासनरूपया विद्यया सिद्धिस्तदाचरणेनापि । अतो भूय इव तमःप्राप्तिरेव तेषाम् ॥ १२ ॥

यस्मादेवं तस्मात्—

अन्यदेवाऽऽहुर्विद्याया अन्यदाहुरविद्यायाः ॥
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

इत्युक्तार्थम् ॥ १३ ॥

तस्मान्मोक्षसाधनस्य परस्परापेक्षकत्वं दर्शयति—

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ॥
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ १४ ॥

विद्यां देवताराधनरूपामविद्यां कर्माचरणज्ञानरूपां तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयत्वेन वेदोक्तविवेकेन जानाति स पुमानविद्यया यथा तन्मोक्षसाधनं भवेत्तथाविधकर्माचरणज्ञानयोगेन मृत्युं संसारं तीर्त्वा विद्ययोक्तविधया देवताराधनज्ञानयोगेनामृतं मोक्षमश्नुते । अन्यथा कर्मोपासनाचरणज्ञानहीनस्य कुतस्तदाचरणं साङ्गं विना तत्कुतो मोक्षस्तस्मात्परस्परापेक्षक एव स एवंविधमन्धतमसप्राप्तिसाधनं कर्म हित्वा यन्मोक्षसाधनं तद्यावज्जीवं कर्तुमिच्छेदित्युक्तम् ॥ १४ ॥

तत्र तथाविधकर्माचरणशीलैरन्तकाले कथं देहस्त्यक्तव्यस्तद्विषय आह । तत्राऽऽदावग्निप्रार्थनम्—

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥
ॐ क्रतो स्मर, क्लिबे स्मर कृतꣳ स्मर ॥ १५ ॥

ॐ क्रतो मयैतावन्तं कालं निर्वर्तिताग्निपुरुषपरमेश्वराराधनरूपाधु-

नाऽन्तकाले तच्छक्तिशून्यं मां स्मर। हे क्लिवेऽग्ने त्वमेतावन्तं कालं सुहुतो मां स्मर तथाऽन्यत्किंच मयाऽऽराधनं कृतं तत्स्मर । किं तदनुस्मरणस्य कार्यं तदाचरणशक्तिशून्येन तत्स्मरणमपि कार्यं तेन यावच्छरीरे प्राणस्तावत्तत्कर्म कृतमेव भवेदतस्तदनुस्मरणम् । ततो देहत्यागादूर्ध्वं वायुर्देहविधारकः प्राणरूपोऽमृतमविनाशमनिलं वायुमधिदेवतारूपमेतु । अथ तदनन्तरमिदं शरीरं भस्मान्तं भस्मावस्थमुपास्याग्नियोगेन भस्मरूपं भूत्वा पृथ्वीमप्येतु यदन्त्येष्टिरूपं कर्म तदपि साङ्गं भवत्वित्यभिप्रायः ॥ १५ ॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १६ ॥

हे अग्ने अग्रणीः परमेश्वररूप सुपथा शोभनः पन्थाः सुपन्थास्तेन सुपथाऽर्चिर्मार्गेणास्मान्मोक्षार्थं निष्कामत्वेन त्वदाराधनशीलान्राये रायं धनं प्राप्तव्यभोगरूपं प्राप्तुं नय । अर्चिर्मार्गेण गतानां शीघ्रमेव मोक्षप्राप्तिरस्त्यतस्तथा प्रार्थनम् । यतो हे देव द्योतमानस्वप्रकाश विश्वानि समग्राणि वयुनानि प्रशस्यानि कर्माणि विद्वान्वेत्सि । तस्मादस्मान्सुपथा राये नय । किंच तत्र यत्किंचिदस्माकं जुहुराणं हुर्छितुं कौटिल्यं विधातुं कौटिल्यं कृत्वाऽन्यमार्गेण नेतुमिच्छज्जुहुराणमेनः पापमज्ञानतः संभूतकर्मविकर्मरूपं तद्युयोधि बधीहि विनाशयेत्यर्थः । अतः प्रार्थनमधुना क्रियते । अथान्यप्रयत्नशून्यत्वात्ते भूयिष्ठां बहुतरां नमउक्तिं नमस्कारोक्तिं विधेम कुर्याम वयं सर्वापराधक्षमाकरणेन मां त्रायस्वेति संप्रार्थनम् ॥ १६ ॥

यथाऽग्निः परमात्मा मनोरूपं तथाऽऽदित्योऽप्यतस्तत्स्तवमाह—

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ॥ १७ ॥

हिरण्मयेन हर्यते काम्यते भोगमोक्षकाङ्क्षिभिर्हिरण्यं वेदत्रयरूपं तन्मयं तत्प्रचुरं हिरण्मयं तेन । तथा चोक्तम्, ‘ आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलम् ’ इत्यादिना । यद्वा हिरण्मयमिव हिरण्मयं ज्योतीरूपं तेन पात्रेण पात्रमिव पात्रं

तेन सत्यस्यास्ति सत्सदेव सत्यमविनाशरूपं परं ब्रह्म तस्य सत्यस्य मुखं रूपमपिहितमाच्छन्नम् । योऽन्तर्वर्ती पुरुषः स परमात्मैव द्रष्टा तच्चक्षूरूपत्वाद्यः परमात्मा स ग(?)मुक्तं परं ब्रह्मैव तत्स्वोपाध्यावृतत्वेन न प्रकाशते । अस्मादर्धर्चात्परम् । 'तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ' इति काण्वाः पठन्ति । यस्मात्सत्यस्य मुखमपिहितं तस्माद्धे पूषन्पुष्यति स्वसत्तया सर्वमिदं पूषा तस्य संबोधनं हे पूषंस्त्वं सत्यधर्माय सत्योऽकपटः फलाशाशून्यत्वाद्धर्म आचरणं त्वदाराधनरूपं यस्य तस्मै सत्यधर्माय सत्यधर्मणे मह्यं दृष्टये दर्शनायापरोक्षसाक्षात्काराय तत्र प्रतिबन्धभूतमुपाधिरूपमपावृणु तस्यापावरणं निवारणं कुरु तन्निरासाच्छुद्धस्वरूपसाक्षात्कारं गमय । हे पूषन्नेकर्षे एक एवर्षति गच्छत्येकर्षिस्तस्य संबोधनं हे एकर्षे यम यमयति स्वसत्तया सर्वं यमस्तस्य संबोधनं हे यम । सूर्य सूते सर्वमिदं सूर्यः सर्वजगत्कारणभूतत्वात्तस्य संबोधनं हे सूर्य । प्राजापत्यः प्रजापतेः कश्यपस्यापत्यं प्राजापत्यस्तस्य संबोधनं हे प्राजापत्य स त्वं रश्मीन्स्वान् व्यूह विगतान्कुरु समूह मण्डलेनैकी कुरूपसंहर । यत्ते तेजस्तेजोरूपं स्वप्रकाशं कल्याणतममतिशयितं कल्याणं शुद्धं तत्ते रूपं पश्याम्यपरोक्षत्वेन । कथं तस्यानुभवः परत्वेन स्यादित्यत्राऽऽह—योऽसावादित्ये मण्डले पुरुषो यत्सत्तयैतन्मण्डलं पूर्यते पाल्यते च स सत्तारूपः पुरुषः पूर्णशुद्धोऽस्ति । सोऽसा उपाधियोगान्मण्डले पुरुषत्वेन वर्तमानः परमेश्वररूपः सोऽहमंशत्वेनास्मि । तस्माद्यो भेदः स औपाधिक एव तन्निरासादभेद एवास्ति सिद्धोऽतः कार्यकारणभेदाभिन्नमुपाधिरूपं निरस्याऽऽत्मन्यात्मत्वेन स्वप्रकाशतया स्वसंवेद्यत्वेन मां स्थितं कुर्वित्यर्थः । इत्यपरोक्षत्वेन ब्रह्मात्मतत्त्वविद् उत्तमाधिकारिणः प्रकारं कर्तुमक्षम इति संप्रार्थनं कृत्वा तद्धृत्पुण्डरीके देहासङ्गत्वेनावस्थाय पुरुषरूपत्वेन विचिन्तयेत् । तदपि कर्तुमशक्तो बहिरादित्यमण्डलमवलोक्य तत्र मतिं निधाय तदनुसंधानेनैव देहं त्यजेन्न स्त्रीपुत्रादीनाम् ॥ १७ ॥

॥ ॐ तत्सदिति श्रीमदादिगुरुदत्तात्रेयदिगम्बरानुचरविरचिते ज्ञानकाण्ड ईशावास्यार्थप्रकाशः समाप्तः ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# अर्थप्रकाशसमेता केनोपनिषत् ।

शिष्याचार्यसंवादेन सम्यग्ब्रह्मविद्याप्रकाशिकेयं केनोपनिषदतस्तदर्थः प्रकाश्यते—

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः
प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं
क उ देवो युनक्ति । श्रोत्रस्य श्रोत्रं मनसो मनो
यद्वाचो ह वाक्स उ प्राणस्य प्राणः । चक्षुषश्चक्षुरति-
मुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १ ॥

प्रेषितं प्रकर्षेणेषितं कार्याकार्ययोः प्रेरितं मनः संकल्परूपं केनान्तर्गतेन सत्तारूपेणेषितं सत्पतति गच्छति कार्यं संपादयितुम् । तथा प्रथमो मुख्य आसन्यो देहावष्टम्भभूतः प्राणः केन सत्तारूपेण युक्तः सन्प्रैति प्रगच्छति स्वधर्मयोगेण । जनाः केनान्तर्गतेनेषितां प्रेरितामिमां वाचं वदन्ति । एवं चक्षू रूपस्य ज्ञानकरणं श्रोत्रं शब्दस्य क उ को नु देवः स्वप्रकाशरूपो युनक्ति द्रष्टव्यादौ प्रेरयति यत्सत्तया श्रोत्रादीनि स्वस्वविषये प्रवर्तन्ते । एवं मनआदीनां यत्सत्तया स्वे धर्मे प्रवृत्तिस्तमन्तर्यामिणं सर्वात्मभूतं ज्ञातुकामैः शिष्यैः पृष्ट आचार्योऽभिवदति । श्रोत्रस्य स्थूलान्तर्गतस्य सूक्ष्मस्यापि श्रोत्रं श्रोत्रभूतं यथा स्थूलमिदं श्रोत्रं सूक्ष्मेणान्तर्गतेन शब्दं शृणोति तथा प्रज्ञानरूपस्यापि तस्य येनान्तर्गतेन सत्तारूपेण श्रोत्रत्वम् । कथम् एकमेव प्रज्ञानं गुणत्रययोगेण पञ्चविंशतितत्त्वाकारमत एवोच्यते—'येन ? वा पश्यतीत्यारभ्य प्रज्ञानस्यैवैतानि नामधेयानि भवन्ति' इति । एवंविधे प्रज्ञाने यस्तिष्ठन् प्रज्ञानादन्तरो यं प्रज्ञानं न वेद यस्य प्रज्ञानं शरीरं यः प्रज्ञानमन्तरो यमयति येनैव प्रज्ञाने प्रज्ञानत्वम् । तस्मिन्गुणयोगाच्छ्रोत्ररूपेण संभूतेऽपि श्रोत्रभूतं यतस्तत्सत्तारूपादपृथक् सिद्धम् । तथा मनसो मनो येनान्तर्गतेन मनसो मनस्त्वं, यद्वाचो ह वाग्येनान्तर्गतेन वाक् प्रवर्तते । स उ स एव प्राणस्य चेष्टाकरणरूपस्य प्राणस्तदाश्रयभूतस्य

कर्तुः सत्स्वरूपत्वात् । एवं चक्षुषश्चक्षुः सर्वकरणेष्वपि सत्तारूपत्वेन तद्धर्मप्रकाशकं सत्स्वरूपं विज्ञायैतस्मिन्कर्तृकरणसंघातरूप आत्मबुद्धिमतिमुञ्चातित्यज नेदं स्थूलाद्यात्मत्वेन मन्वीथाः। कथम्, इदं स्थूलं सर्वदा व्यवहारे वर्तमानत्वादात्मत्वेन प्रतीयमानमपि नाऽऽत्मा दृश्यत्वाज्जडत्वात्। यदन्तः प्रज्ञानमयं कर्तृभोक्तृज्ञातृरूपं करणप्रकाशकं स्थूलस्य प्रवर्तयितृ तदात्मरूपमिति मतिमतिमुञ्च तदपि विलक्षणधर्मसाक्षित्वाज्ज्ञेयमेव न ज्ञातृरूपम् । अभिहितप्रकारेण येन सत्तारूपेण प्रज्ञानान्तर्गतेन विनेदमपि जडमनात्मेति बुद्ध्वा सर्वमूलप्रज्ञानान्तर्गतत्वेन ज्ञानाज्ञानानवलम्बनेन निर्विकल्पतया तदधिष्ठाननिष्ठो भवेदिति भावः । किं तत्फलमित्यत्राऽऽह—धीराः स्फुरणादिसर्वावलम्बपरित्यागेन यस्य भासा सर्वमिदं विभाति तस्मिन्नात्मनि चित्तं दधाना विज्ञानिनः संसिद्धा अस्माल्लोकात्प्रेत्य प्रारब्धक्षये देहत्यागेन गत्वाऽमृता अविनाशिनो भवन्ति । यतो ' ब्रह्मविद्ब्रह्मैव भवति ' ॥ १ ॥

न तद्विज्ञाने कर्तृकरणसंघः साधनमित्याह—

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो
न विद्मो न विजानीमो यथैतदनुशिष्यात् ॥
अन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्विचचक्षिरे ॥ २ ॥

चक्षू रूपज्ञानकरणं यथा स्वविषयं गच्छति तथा तत्र सत्स्वरूप आत्मनि न गच्छति न तं विषयी करोति तथा वाक्परादिरूपाऽपि न गच्छति न तया यथावत्तदुपपाद्यते नो मनोऽपि कर्तृस्वरूपं स्वसंकल्पयोगेनात एवोच्यते ' यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ' इति । संकल्पविकल्पपरित्यागेन केवलेन प्रज्ञानेनापि न विद्मो न विजानीमो वयम् । श्रूयते च ' यं प्रज्ञानं न वेद यो बुद्धेः परतस्तु सः ' इति । ज्ञानाज्ञानपरिवर्जनेनाऽऽत्मनि विज्ञातेऽप्याचार्यो यथा येन प्रकारेणैतदेतमनुशिष्यादनुशासनं कुर्यात्तदपि न विजानीमो ज्ञानसाधनभूतप्रज्ञानादिनिरासेन कथं तद्विज्ञानमुपदिशेत्तु । तर्हि तद्विज्ञानमस्ति वा नास्तीति चेत्, य आचार्यास्तत्परं तत्त्वं नोऽस्माकं विचचक्षिरे विशेषेण व्यक्तमुक्तवन्तस्तेषां पूर्वेषां पूर्वस्थितानां वचोभिरितीत्थं शुश्रुम श्रुतवन्तो वयम् । कथम्, तदात्मतत्त्वं विदितात्प्रज्ञानादिभिर्विदितादन्यदेव

भिन्नमेव न तथा प्रज्ञानादिभिर्ज्ञातुमर्हं सत्तारूपत्वे तदविषयभूतत्वात् । तदा तदविदितमेव स्यादथो अविदितादप्यन्यदेव सदाचार्यप्रसादादात्मन्यात्मत्वेनापरोक्षतयाऽनुभूयते चातो न केवलावेदनमपि तस्य। ननु विदितादन्यदविदितं तस्मादन्यद्विदितं किं तयोरन्यत्तत्। अधि विदिताविदितयोरधिकृत्य वर्तमानं तद्द्वयं यस्मिन्नधि यत्सत्तयाऽस्ति 'तस्य भासा सर्वमिदं विभाति' ॥ २ ॥

एवंविधस्य तस्य कथमुपदेशस्तत्राऽऽह—

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।
यच्छ्रोत्रेण शृणोति येन श्रोत्रमिदꣳ श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।
यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ३ ॥

यद्वाचाऽनभ्युदितमनभ्युक्तं येनान्तर्गतेन वाक्परादिरूपाऽभ्युद्यतेऽभ्युच्यते तत्कारणप्रज्ञानाधिष्ठानत्वात् । तदेव ब्रह्म व्यापकं पूर्णं च त्वं विद्धि विजानीहि नान्यद्वाचाऽभ्युक्तं तद्भवति यद्वाऽऽशु सर्वोपाधिनिरासेन शुद्धेनाऽऽत्मरूपेण तत्त्वमेवासीति विद्धि नेदं किं यदिदमुपासका जना आत्मेतरद्देवतारूपं ब्रह्मेति मत्वा तात्त्विकभेदधियोपासत उपासनां कुर्वन्ति तन्न दृश्यत्वेनानात्मभूतत्वात् । उच्यते च 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता' इति । एवं सति योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुस्तस्माद्ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद । नन्वस्थूलादिविशेषणैर्वेदादिवाक्यैरभ्युदितं श्रूयते तथा गुरुशिष्यवाग्भिरप्यभ्युद्यते ततस्तदवबोधोऽपि भवत्येवं सति किमेवमुक्तं यद्वाचाऽनभ्युदितमिति । सत्यं, वेदादिवाक्परोक्षज्ञानस्यैव

कारणभूता नापरोक्षज्ञानस्य तथा चेत्तदा श्रुतस्य पुनर्दर्शनापेक्षा न स्यात्। तयोत्पन्नास्थस्यापरोक्षज्ञाने दर्शनमेव साधनमस्ति तद्विहाय कृततदवलम्बनस्य किं स्यात्। तथा वेदाचार्यवाक्यैः परोक्षत्वेन विज्ञातं तत्कल्पनारूपं न परब्रह्मात्मरूपं भवति तदपरोक्षज्ञाने वाच्यवचनवक्तृत्वपरित्यागेन तन्मूलत्वेनाऽऽत्मन्यात्मत्वेन ब्रह्मात्मानुभवोऽस्त्यत एवोच्यते 'तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्' इति। अत एवापरविद्यासंपन्नेनापि परविद्यार्थिना नारदेन सनत्कुमारं प्रत्युच्यते 'मन्त्रविदेवास्मि नाऽऽत्मविद्' इति। तस्माद्वाचा तस्य परोक्षज्ञानं नापरोक्षम्। किंच यद्ब्रह्म प्राणेन पञ्चवृत्त्यात्मकेन न प्राणिति यथेदं स्थूलं प्राणेन प्राणिति न तथा प्राणेन प्राणनक्रियां करोति। येनान्तर्गतेन प्राणः प्रणीयते स्वधर्मे प्रकर्षेण नीयते प्राप्यते। ननु तदेव प्रत्यगात्मरूपं सत्स्थूलेऽस्मिन्प्राणेन प्राणिति नु। न। तदौपाधिकं रूपमुपाधेर्विवर्तरूपत्वेन तदपि तथैव तेन शुद्धे न तद्भानं किंचित्। तत्सत्तयैव विवर्तस्य भानमतो येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति पूर्ववत्। यश्चक्षुषा कोऽपि न पश्यत्यदृश्यत्वात्। येनान्तर्गतेन चक्षूंषि पश्यति द्रष्टृस्वरूप आत्मा चक्षुषा रूपान्तरं विजानाति तथा तद्धर्मसाक्षित्वेन चक्षूंष्यपि ममेयं दृष्टिः समीचीना रूपज्ञानविषय इति भावेन। तस्माद्दृश्यदर्शनसाक्षित्वेन तत्सापेक्षितद्रष्टृत्वान्तर्गतत्वेन सर्वासङ्गं चक्षुरगोचरभूतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। यच्छ्रोत्रेण परोक्षज्ञानकरणशब्दज्ञानकरणेन न कोऽपि शृणोति सर्वात्मभूतत्वेनापरोक्षत्वात्। येनान्तर्गतेन प्रज्ञानाधिष्ठानरूपेणेदं श्रोत्रं श्रवणज्ञानवच्छ्रुतं भवति। यथाऽयमात्मा श्रोत्रेण नानाविधाञ्छब्दान्विजानाति। तथा श्रोत्रमपि तद्धर्मसाक्षित्वात्। तस्माच्छ्रव्यश्रवणतत्सापेक्षश्रोतृत्वान्तरङ्गमात्मरूपं न श्रव्यवदितरत्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। यत्परं तत्त्वं मनसा संकल्परूपेण न मनुते न विजानाति कश्चित्। यथा मनसा ज्ञानकरणद्वारैर्बहिर्भूतं शब्दादिगुणवद्विषयजातं जानाति यथा चान्तर्गतानपि तथा न तत्तत्त्वं निर्गुणत्वादात्मरूपत्वाच्च। येनान्तर्गतेन सत्तारूपेण मनः सधर्मकं मतं विज्ञातमित्याहुस्तत्साक्षित्वात्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ ३॥

करणान्तर्गतत्वेन सुप्रकाशत्वादात्मरूपं सुविज्ञेयमेवेति मन्वीरन्नित्यत्राऽऽह—

यदि मन्यसे सुवेदेति दह्रमेवापि नूनम् ।
त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य ॥ ४ ॥

यदि तत्परं ब्रह्म करणानां प्रवर्तकत्वेनाऽऽत्मरूपत्वात्सुवेद सुखेनैव विजानामीति मन्यसे जानीषे तथाऽपि नूनं निश्चयेन दह्रमेव तज्ज्ञानं स्वल्पमेव । ज्ञानज्ञातृत्वयोगेन ज्ञातं तज्ज्ञेयत्वेन परिच्छिन्नं तथा तज्ज्ञानमपि तेनानन्तोऽनन्तरः पूर्ण आत्मा कथं ज्ञातो भवेत्तस्मान्न सुवेदनं तस्य। किंच, यद्यदि यस्यान्तर्यामिणः सत्तारूपत्वेन मनआदीनां प्रकाशकस्य परस्य ब्रह्मणो रूपमुक्तविधं वेत्थ विजानासि साक्षित्वयोगात्तदा यद्यद्रूपस्त्वमसि तदतत्त्वमस्यनवस्थाप्रसङ्गात् । कथम्, आत्माविज्ञाने चेज्ज्ञानज्ञातृत्वालम्बस्तेन ज्ञातः स आत्मा स्विज्ज्ञाता न ज्ञातो ज्ञेयत्वात्तज्ज्ञानाश्रयभूत एव ज्ञेयानुभवयोगात्पुनस्तथा तज्ज्ञाने प्रवृत्तस्य कथं नानवस्थाप्रसङ्गः । अतो न तथा तद्विज्ञानम् ॥ ४ ॥

अथ विकल्पयते तज्ज्ञानस्यास्तित्वनिश्चयाय—

वेदेष्वनुमीमांस्यमेव ते मन्ये विदितम् ।
नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ।
प्रतिबोधविदितममृतꣳ हि विन्दते ॥ ५ ॥

अथ प्रकारान्तरेण वदति वेदेषु तन्मीमांस्यमेव नु विचार्यमेव नत्वपरोक्षत्वेन तद्विज्ञानमस्त्यतस्तैर्वेदैर्विदितं न विदितमिति मन्ये तेषां शब्दरूपत्वात् । अतस्तत्रैवोच्यते 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । तत्कारणभूता वाक्प्रज्ञानमपि यन्न वेदेति श्रूयते 'यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः । यः प्रज्ञाने तिष्ठन्प्रज्ञानादन्तरो यं प्रज्ञानं न वेद यस्य प्रज्ञानꣳ शरीरं यः प्रज्ञानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः । य आत्मनि तिष्ठन्नात्मानमन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरमात्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति । तस्मान्नाहं मन्ये सुवेदेति । तदा तज्ज्ञानाभाव एव नु । न वेद न विजानामीति नो न न तदविज्ञातमपि । तथा वेद च विजानाति न विज्ञातमपि

न भवति ज्ञानसाधनप्रज्ञानाद्यज्ञेयत्वात्। तस्मात्तज्ज्ञानं कथमिति चेत्, यस्य साधनसंपत्संपन्नस्य संप्राप्ताचार्यप्रसादस्य लब्धव्यतिरेकक्रियस्य मनोबुद्धीन्द्रियैर्विज्ञातुमशक्यत्वात्तत्सर्वनिरासेन विगतप्रधानधर्मत्वेन ज्ञातृत्वरहितत्वादमतमविज्ञातवत्तस्य मतं मतमन्तृमनननिरासेनाऽऽत्मन्यात्मत्वे बुद्धम्। यस्यापरविद्योत्पन्नपरोक्षज्ञानिनो मतं परोक्षज्ञानसच्छ्रवणमनननिदिध्यासायोगेन निष्प्रपञ्चं निर्विकारं निराकारं चिदानन्दमयं सर्वगतं परं ब्रह्मैवाहमस्मीति बुद्धया निश्चितम्। संपरोक्षज्ञान्यलब्धव्यतिरेकक्रियत्वान्न वेद नापरोक्षज्ञानवान्यतः। अतो विजानतां वेदशास्त्रार्थज्ञानवतामविज्ञातं न तैर्विज्ञातं तज्ज्ञानप्रतिकूलशब्दवादनिरतत्वात्। तस्मादविजानतां सर्वशाब्दवादं विहाय मनोबुद्धयादीनां ज्ञानमपि च प्रज्ञानेनाप्यजानतां तदसङ्गतया सहजात्मस्थित्याऽवस्थितानां विज्ञातमुक्तप्रकारेण तैरेव बुद्धम्। अत एवोच्यते 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्। तमेवैकं विजानथाऽऽत्मानमन्या वाचो विमुञ्चथ' इति। एवं पुंसा प्रतिबोधविदितमुक्तविधनिर्विकल्पाकारप्रज्ञानेनाऽऽत्मन्यात्मत्वेनोत्पन्नो यः प्रतिबोधस्तेन विदितमपरोक्षत्वेन विज्ञातं मतं चाऽऽत्मत्वेन सोऽमृतत्वममृतभावं तदेकरूपत्वाद्धि निश्चयेन विन्दते लभते नान्यो बहिर्मुखः शब्दवादरतो मनआदिभिश्च ज्ञातुं प्रवृत्तश्च ॥५॥

किंच—

आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्।
इह चेदवेदीदथ सत्यमस्ति
नो चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचिन्त्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ६ ॥

आत्मना कर्तृकरणसंघातरूपेण वीर्यं मोक्षसाधननिर्वर्तनसामर्थ्यं विन्दते लभते न साक्षादमृतत्वम्। अमृतं मोक्षस्तु विद्यया परसंज्ञिकयोक्तया विन्दते। तस्माज्ज्ञानादेव तु कैवल्यम्। अतो यः कश्चिदधिकारी लब्धपरविद्ययोत्पन्नास्थ इहास्मिन्नेव संसारे सदाचार्यप्रसादासादितपरविद्ययाऽऽत्मनाऽऽत्मानमवेदीद्वेत्स्यथ तर्हि सत्यमस्ति सदेव भवत्युक्तं च

'ब्रह्मविद्ब्रह्मैव भवति' इति। योऽनधिकारित्वान्न चेदिहावेदीत्तदा महत्य-विच्छिन्नजन्ममृत्युयोगेन विनष्टिर्विनाशो दुःखसागरेऽस्मिन्संसारे निम-ग्नत्वात्। अतो धीरा उक्तविवेकेनाऽऽत्मानं विदित्वा लयविक्षेपनिरासेन तत्रैव चित्तं दधाना भूतेषु भूतेषु नानाविधत्वेनाऽऽभासमानेषु विचिन्त्य सर्वत्र सत्तारूपत्वेनैकमेवाऽऽत्मतत्त्वमस्तीति विज्ञायास्मान्मृत्युलोकात्प्रेत्य प्रारब्धक्षयेण गत्वाऽमृता अमरणधर्माणः सत्स्वरूपा भवन्ति ॥ ६ ॥

एवं सत्तारूपस्याविज्ञेयस्य परब्रह्मणो महत्त्वदर्शनायेदमभिधीयते—

ब्रह्म ह देवेभ्यो विजिग्ये तस्य हि ब्रह्मणो विजये
देवा अमहीयन्त । त ईक्षन्तास्माकमेवायं विज-
योऽस्माकमेवायं महिमेति तद्धैषां विजिग्ये ॥ ७ ॥

ब्रह्मोक्तविधं ह किल सर्गादौ मायायोगेनेश्वररूपं सद्देवेषु सत्तैश्वर्य-प्रदत्वेन देवेभ्य इन्द्रादिभ्यो विजिग्ये सर्वोत्कर्षेण ववृते। तस्य हि ब्रह्मणो विजये ते देवा अमहीयन्त । तत्सत्तासंभवमहत्त्वयोगेन पूज्या अभूवन्सर्वलोकवरिष्ठत्वात् । ततस्ते देवास्तमन्तर्यामिणमात्मकारणं सत्ताप्रदमविज्ञायेक्षन्तैक्षन्ताऽऽत्मनीक्षां विचारं चक्रुः। कथम्, अस्माकमे-वायं सर्वैरनुभूयमानः सर्वश्रेयान्विजयोऽस्माकमेवायं महिमा महत्त्वमिति सर्वमस्मत्कृत्यं वयमेव सर्वश्रेष्ठाः सर्वज्ञा इति भावेन तदा तद्विज्ञाय तद्ब्रह्म ह किलैषां देवानां मध्ये विजिग्ये सर्वोत्कृष्टत्वप्रदर्शनेना-वर्तत ॥ ७ ॥

कथं तदाह—

तेभ्यो ह प्रादुर्बभूव तं न व्यजानत । किमेतद्यक्ष-
मिति । तेऽग्निमब्रुवन् । जातवेद एतद्विजानीहि किमे-
तद्यक्षमिति । तथेति तदभ्यद्रवत् । तमवदत्कोऽ-
सीति । अग्निर्वा अहमस्मीत्यब्रवीत् । जातवेदा वा
अहमस्मीति तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्व-
मादहेयं यदिदं पृथिव्यामिति । तस्मै तृणं निदधा-
वेतद्दहेति । तदुपप्रेयाय सर्वजवेन तन्न शशाक

दग्धुम् । स तत एव निवृत्तो नैतदशकं विज्ञातुं
यदेतद्यक्षमिति ॥ ८ ॥

तेभ्यो देवेभ्यः प्रादुर्बभूव भिन्नत्वेन तुरीयेण सर्वेश्वररूपेण व्यक्तमभूत् । तमतीवाद्भुतं सर्वपूज्यं व्यक्तं दृष्ट्वाऽपि कोऽयमिति न व्यजानत विज्ञातवन्तः । एतत्पुरोवर्ति यक्षं पूज्यं सर्वश्रेष्ठं किमस्तीति । तं विज्ञातुकामास्ते देवा अग्निमग्रणीत्वेन सर्वश्रेष्ठं मत्वाऽब्रुवन्हे जातवेदस्त्वमेतद्विजानीहि समीपं गत्वा किं किंरूपमेतद्दृश्यमानं यक्षं पूजनीयं सर्वोत्कृष्टत्वाद्विद्धि । तैः प्रार्थितोऽग्निस्तथेति तेषां विजिज्ञासावाक्यमङ्गीकृत्य तद्यक्षमभ्यद्रवदभ्यगच्छत् । गत्वाऽन्तिकमवस्थितं तं तद्यक्षं त्वं कोऽसीत्यभ्यवददुक्तवत् । तच्छ्रुत्वाऽग्निर्वा अहमस्मीत्यब्रवीत्तत आत्मनो महत्त्वख्यापनाय पुनराहाहं वा अहमेव जातवेदाः प्रतिसर्गं जायमानस्य सर्वस्य वेदिताऽस्मीति च । तदाकर्ण्य यक्षमूचे तस्मिन्नुक्तविधे त्वयि किं वीर्यमस्तीति सोऽवददिदं सर्वमप्यादहेयमादग्धुं शक्नुयाम् । किं तदिति चेद्यदिदं किंच पृथिव्यामस्ति तत्सर्वमपि । तच्छ्रुत्वा तद्यक्षं तद्गर्वापनोदनायेच्छयैव तस्मा अग्नये तृणं निदधावेतद्दहेत्युक्तवत् । ततः सर्वमपि भस्मयतो मम किं तृणदाहे शङ्केति धिया सर्वजवेन सर्ववेगेण यथा स्ववेगस्तथा तत्तृणमुपप्रेयाय समीपं गतवान् । तथाऽप्यग्निर्निजतेजसा तद्दग्धुं न शशाक समर्थोऽभूत् । सोऽग्निस्तत एव विगतगर्वः सन्निववृते । यत्संनिधौ तृणदाहेऽप्यसमर्थोऽहं कथं तद्रूपं विज्ञातुं शक्नुयामिति बुद्ध्वा तदविज्ञायैव निवृत्तः स देवान्प्रत्यागत्योक्तवानहमेतद्विज्ञातुं नाशकं शक्तोऽभवं यदेतदेवंरूपं यक्षमस्तीति ॥ ८ ॥

ततः—

अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति ।
तथेति तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति वायुर्वा
अहमस्मीत्यब्रवीत् । मातरिश्वा वा अहमस्मीति ।
तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वमाददीय यदिदं
पृथिव्यामिति । तस्मै तृणं निदधावेतदादत्स्वेति

तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽदातुम् । स तत
एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥९॥

अथाग्न्युपरमानन्तरं ते देवा वायुमब्रुवन् हे वायो त्वमेतद्यक्षं विजानीहि यतस्त्वं सर्वान्तर्यामित्वेन सर्वावधारकोऽसि किं किंरूपं तद्यक्षमिति । ततो वायुस्तथेत्युक्त्वा तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा मातर्यन्तरिक्षे श्वयति गच्छति मातरिश्वा मेघगतिकारणो ब्रह्माण्डाश्रयभूतोऽहमस्मीति तस्मिंस्तथाविधे त्वयि किं वीर्यमिति । यदिदं पृथिव्यां मूर्तभूतत्रयकार्यं तत्सर्वमप्याददीयाऽऽदातुं शक्नुयामिति । ततस्तद्यक्षं तस्मै तृणं निदधावेतदादत्स्वेति । स वायुः सर्वजवेन तदुपप्रेयाय तन्न शशाकाऽऽदातुं सोऽप्यग्निरिव तत एव निववृते । देवान्प्रत्यागत्योवाच नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ ९ ॥

ततः किं वृत्तम्—

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति
तथेति तदभ्यद्रवत्तस्मात्तिरोदधे स तस्मिन्नाकाशे
स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ताꣳ
होवाच किमेतद्यक्षमिति ॥ १० ॥

अथ ते देवा इन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमागतं वीक्ष्य तद्यक्षं तस्मात्स्थानात्तिरोदधेऽन्तर्हितम् । तदा तस्मिन्नाकाशे सहसाऽभिव्यक्तां स्त्रियं दृष्ट्वा स मघवाऽऽजगामाऽऽगतः । किं तत्स्त्रीरूपमिति चेत् । यत्सच्चिदानन्दरूपं ब्रह्म तदेव सर्वगतत्वेन सर्वाधिष्ठानं सत्तारूपं सर्वावभासकं चिन्मयत्वेन प्रकाशकं स्वगतचित्प्रकृतियोगेनेश्वररूपं सर्वकर्तृ सर्वज्ञं तद्दत्तमेव सर्वत्र सामर्थ्यं स्वधर्मकर्मप्रकाशनं चेत्यविज्ञाय तदात्मन एवेति बुद्ध्या मोहितानां तद्भावनिरासेन यथार्थभावप्रकाशनेनैव यथार्थतत्त्वसंप्राप्तिस्तया मोक्ष इति भावेन स परमात्मा सर्वैर्यक्षं श्रीमद्देवदेवरूपं धृत्वाऽऽत्मनः सर्वश्रेयस्त्वं प्रदर्शयित्वा तन्निजशक्तिमुपसंहृत्याऽऽत्मरूपज्ञानमपि तेषां निजेन ज्ञानेन नास्तीति प्रकाश्य स्वयमन्तर्हितोऽभूत् । ततः स्वीयां योगमायां स्त्रीरूपेण पृथक्कृत्वा तया स्वरूपं बोधयामास न स्वयम् । किंविधा

सा । बहुशोभमानां बहु यथा स्यात्तथा शोभमानामनुपमां परप्रकृतित्वात् । उमामवति सर्वेषां विज्ञानदानेनाशुभसंसारभयाद्रक्षतीत्युमा तां हैमवतीं हिनोति गच्छति हेम प्रज्ञानमेव कारणोपाधौ तथांऽशत्वेन कार्योपाधावप्यन्तराकाश आश्रयाभिन्नत्वेन स्थितं सत्करणद्वाभिर्बहिर्दीपप्रभेव गतिमत्त्वाद्धेम यद्वा हिनोति वर्धयति सर्वप्रपञ्चं तद्गुणमूलत्वात्तद्विस्तारस्य हेम तद्वान्परमात्मा हेमवांस्तत्संबन्धिनी तत्प्रकृतिरूपत्वाद्धैमवती तां तत्राऽऽविर्भूतां दृष्ट्वा तामुवाच मघवा किमेतद्यक्षमिति ॥ १० ॥

एवं पृष्टा सा—

ब्रह्मेति होवाच । ब्रह्मणो वा एतद्विजये महीयध्वमिति । ततो हैव विदांचकार ब्रह्मेति तस्माद्वा एते देवा अतितरामिवान्यान्देवान् । यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनं प्रथमो विदांचकार ब्रह्मेति । तस्माद्वा इन्द्रो अतितरामिवान्यान्देवान्सन्ह्येनन्नेदिष्ठं पस्पर्शुः संह्येनं प्रथमो विदांचकार ब्रह्मेति ॥ ११ ॥

ततः सा ब्रह्मेति होवाच । ब्रह्मणो वा अस्यैतदस्मिन्सर्वोत्कृष्टे नित्ये विजये सत्तारूपे महीयध्वं पूर्वमस्माकमेवायं विजयोऽस्माकमेवायं महिमेतिभावेन संजाताभिमानयोगेन विगतमहिमानो यूयं पुनः स्वकर्मक्षमत्वेन पूज्या यथापूर्वं भवतेति । तद्वचनात्स इन्द्रो विदांचकार विवेद ब्रह्मेति यत्सर्वजगत्कारणमीश्वररूपं तुरीयं तदेवेदमस्तीति । अत्र तुरीयं नास्त्येवेति केचिद्वदन्ति तन्न तथा न केवलस्य निरुपाधिकस्य ब्रह्मणो रूपावलम्बनेन भावपरीक्षणं संभवति तस्यैव स्वगतचित्प्रकृत्यवलम्बनेन तद्गतशुद्धसत्त्वप्राधान्येन सर्वज्ञसर्वसाक्षित्वयोगेन सर्वमपि घटते सर्वेश्वरत्वात् । अतो देवतात्रयादिसर्वजगत्कारणं तुरीयमस्त्येवात एव पुराणेषु श्रूयते 'महर्षिणाऽत्रिणा ब्रह्मविदां वरेण सर्वज्ञेन प्रजाकामेन तस्यैवाऽऽराधानं व्यधायि' इति। 'शरणं तं प्रपद्येऽहं य एव जगदीश्वरः। प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्' इत्यादिभिः। ननु जगदीश्वरत्वं त्रयाणामपि भवति नु। सत्यं तथाऽपि तेन ते प्रत्याख्याता इति श्रूयते 'एको मयेह

भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् । अत्राऽऽगतास्तनुभृतां मनसोऽपि दूराद्ब्रूत प्रसीदत महानिह विस्मयो मे, इति । तेषां स्वरूपाज्ञानादिति चेत् । न । तच्छ्रवणात् । 'विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः । ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां य इहोपहूतः' इति । तस्मात्तेन तुरीय एवाऽऽराधितः स मयाऽहं ते दत्त इति वरं दत्त्वा संभवनं कृतवानत एव तेनाऽऽत्मनः सर्वेश्वरत्वं सह्याद्रावामलीग्रामे श्रीदेवदेवरूपेण दर्शितमिति श्रूयते 'अस्मिन्क्षेत्रे महाराज द्वासप्ततिचतुर्मुखाः । मुक्तिं प्राप्तास्तथा सर्वे सिद्धाद्याः सनकादयः। कथं मुक्तिं प्राप्ता इत्यत्रैकस्य ब्रह्मणो विचारं विस्तरेण प्रकथ्याग्र उक्तम् 'अनेनैव क्रमेणात्र द्वासप्ततिचतुर्मुखाः । सह्याद्रौ देवदेवेशे मुक्तिं प्राप्ताः कुरूद्वह ।' इति । यद्रूपे द्वासप्ततिचतुर्मुखा लयं याताः स न देवतात्रये कश्चिद्विज्ञेयः समगुणरूपत्वात् । यो मायाश्रयः परमात्मा तुरीयः स एव तथा विज्ञेयस्तस्मात्स नास्तीति न वक्तव्यम् । ननूमा हैमवती सा शिवपत्न्यतः स एवात्र यक्षमिति किं नोच्यते । न । पूर्वोत्तरवाक्यविरोधात् । कथं 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इत्यादिना परस्यैवोपक्रमोऽस्ति पूर्वं तत्सत्तयैव सर्वस्य विजयं देवैर्मतम् 'अस्माकमेवायं विजयोऽस्माकमेवायं महिमा' इति तदन्यथाज्ञाननिरासार्थं तद्यक्षं रूपं तस्यैवातः सा ब्रह्मेत्युवाच 'ब्रह्मणो वा एतद्विजये महीयध्वम्' इति । तथा वक्ष्यते चाध्यात्मकथने 'यदेतद्वाचं मनो गच्छति न चैतद्वाङ्मनोरूपं तदुपस्मरति' इति । तस्मान्नापरशिवरूपं तत्तुरीयमेव । तस्माद्वा एवंविधेश्वररूपविज्ञानादेत इन्द्रादयो देवा अन्यांस्तत्स्वरूपाज्ञानिनो देवानतितरामिवातिक्रान्ततरा इव श्रेष्ठा एव । यद्यस्मात्तेऽग्निर्वायुरिन्द्रश्च हि निश्चयेनैनमुक्तविधं सर्वकारणभूतं नेदिष्ठमतिशयितमन्तिकं विदांचक्रुस्तेन विज्ञानयोगेन ते ह्येनं पस्पर्शुः स्पृष्टवन्तः । तेष्विन्द्रः प्रथमोऽग्निवायुभ्यां ब्रह्मेति विदां चकार तस्मादिन्द्रोऽन्यानग्निवाय्वादीनतितरामिव वर्तते स ह्येनं नेदिष्ठं प्रथमं संपस्पर्श तत इतरे ह्येनं संपस्पर्शुः स ह्येनं प्रथमो विदांचकार ब्रह्मेति ततोऽन्ये तद्वचनाद्विदांचक्रुस्तस्मादिन्द्रोऽतितरामिव तेभ्यः ॥ ११ ॥

तस्य रूपकथनानन्तरं नाम कथ्यते—

तस्यैष आदेशः । यदेतद्विद्युतो३ विद्युतो३ इति
न्यमीमिषदो३ इत्यधिदैवतम् । अथाध्यात्मम् । यदे-

तद्गच्छति वाचं मनो नैव चैतदुपस्मरत्यभीरुसंकल्प-
स्तद्धि तद्धनं नाम तद्धनमित्युपासितव्यम् ॥ १२॥

तस्योक्तविधस्य यक्षस्यैष वक्ष्यमाण आदेशः संज्ञा यद्यस्मादेतद्यक्षं विद्युतो३ विद्युतो३ इति विद्युता ऊ, विद्युता ऊ। विद्योतते विद्युता ऊ इव विद्युदिवेत्यर्थः। तेन विद्युतेत्यस्याऽऽदेशः। कस्मादिति चेत्। न्यमीमिषदो न्यमीमिषत्। आ ऊ। ऊ इव। विद्युदिवाऽऽत्मानम्, आ ईषत्। दर्शयित्वा न्यमीमिषद्वयमज्जयदाच्छादितवानित्यर्थः। तस्माद्विद्युदित्यस्याऽऽदेशः। इत्यधिदैवतम्। अथाध्यात्मं कथ्यते। यदेतदात्मनि वर्तमानं शुद्धं रूपं तद्वाचं चतुर्विधां मनश्च गच्छति सत्तारूपत्वेनान्तर्गतं नैवोपस्मरति तथात्वेन विजानात्यधिदैवताग्न्यादीनामिव। तद्धि सोऽभीरुसंकल्पो बिभेति भीरुर्न भीरुरभीरुः संकल्पो यस्य स सत्संकल्पवान्। तद्यक्षं नाम धनं दधाति गूढत्वेन धनं गुह्याद्गुह्यतमत्वेनान्तरतरत्वेन च धनं नाम। अतस्तद्धनमित्युपासितव्यम्। यथा धनमतिप्रियत्वेन जनैरुपास्यते तथोपासनीयम् ॥ १२ ॥

किं फलं तदाह—

स य एवं वेद। अभि हैनं सर्वाणि भूतानि। स गच्छत्युपरि दं भो ब्रूहीत्युक्त्वा त उपनिषत्। ब्रह्मोवाच। त उपनिषदमब्रूमेति तस्मै तपो दमः कर्मेति प्रतिष्ठां वेद सर्वाङ्गानि सत्यमायतनम्। यो वा एतामेवं वेद। अभिहतपाप्मानम्। अनन्ते स्वर्गे लोके जये प्रतितिष्ठति प्रतितिष्ठति ॥१३ ॥

स यः कश्चिदधिकार्येतदुक्तमात्मरूपमेवं वेदैनं ज्ञानिनं सर्वाणि भूतान्यभिगच्छन्त्यभिजनवान्भवति यत्र क्वचन गच्छति। तत्र तैः सह प्रतितिष्ठति। तेऽग्न्यादयस्तद्यक्षं ब्रह्मापरोक्षत्वेन विद्युदिव विदित्वा तस्मिन्विज्ञातेऽपि नित्यनिष्ठासिद्ध्य उपरि ब्रह्मभुवनं गत्वा ब्रह्माणमूचुः। भो ब्रह्मन्दन्दमं ब्रूहीत्युक्त्वा तमुपनिषेदुः। तच्छ्रुत्वा स ब्रह्मा भवद्भिर्यत्पृष्टं तदुपनिषद्रूपं गुह्यमस्तीत्यूचे। ततस्ते देवा उपनिषदमब्रूम तदेव गुह्यं पृच्छामो वयमित्यूचुः। ततो ब्रह्मा तस्मा अग्न्यादिदेवतासमूहाय

तपोऽन्तरिन्द्रियनिग्रहरूपं दमो बाह्येन्द्रियनिग्रहः कर्म परमेश्वराराधनरूपमिति प्रतिष्ठां सर्वप्रतिष्ठाभूतामुपनिषदं वेद यदाज्ञापितवानुक्तवानित्यर्थः । तद्ब्रह्मविज्ञानं न तपआद्याचरणादृतेऽस्ति तदर्थमुक्तमाचरणीयमिति भावः । अथ स प्रजापतिस्तदाचरणान्ते पुनरागताय देवतासमूहाय सत्यमविनाश्यायतनं सर्वाधिष्ठानभूतं परं ब्रह्म सर्वाङ्गानि तत्साधनभूतानि सर्वाण्यप्यङ्गानि वेद । एतद्विज्ञानफलमाह—यो वा कश्चिदधिकार्याचार्यप्रसादादेतामुक्तविधामभिहतपाप्मानमभिहतः प्रनष्टः पाप्मा यया तामुपनिषदमेवं देवैर्विज्ञातवद्वेद सोऽनन्ते न विद्यमानोऽन्तोऽवसानं यस्य तस्मिन्स्वर्गे सर्वोच्छ्रिते लोक आत्मरूपे जये सर्वदा जयशीले सर्वत्र सत्तारूपे प्रतितिष्ठति तदेकरूपत्वेन तिष्ठति प्रतितिष्ठतीति द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥ १३ ॥

इति श्रीमदादिगुरुदत्तात्रेयदिगम्बरानुचरविरचितः केनोपनिषदर्थप्रकाशः समाप्तः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अर्थप्रकाशसमेता कठोपनिषत् ।

कठोपनिषद्यपि ब्रह्मविद्या प्रायशः कथिताऽस्त्यतस्तस्या अर्थः प्रकाश्यते । उशन्ह वा इत्यादिः कठोक्तिः । यजुषि काठकेषु नाचिकेताग्निचयनप्रसङ्ग एव तत्प्रसङ्गानुसारेण प्रायशोऽभिहितो न त्वियं परब्रह्मविद्याऽतः पुनस्तां विचिख्यासुः कठ आह—

> उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश ॥ १ ॥ २ ॥

वष्टि कामयते मुक्तिमुशन्नाम ह किल वै प्रसिद्धो वाजश्रवसो वाजेऽन्ने जातं श्रवः कीर्तिर्यस्य स वाजश्रवास्तस्यापत्यं वाजश्रवसः सर्ववेदसं सर्ववेदः सुवर्णं तदादि पदार्थजातं यस्यां तां सर्ववेदसं दक्षिणां ददौ साङ्गं यज्ञं निर्वर्त्य तदर्थमवञ्चकत्वेन सर्वमपि धनं गवादिपदार्थाँश्चर्त्विगादिभ्यो ब्राह्मणेभ्यः समागतेभ्यो दत्तवान् । तस्य हाशतो वाजश्रवसस्य नचिकेता नाम पुत्र आस बभूव । तं ह कुमारं सन्तं साधुतमं विद्याविवेकसंपूर्णं दक्षिणासु यजमानेन प्रत्तासु गवादिरूपासु नीयमानास्वृत्विगादिभिः सतीषु तद्दृष्टवतः पितुरात्मनश्च श्रेयो हितसाधनविषया श्रद्धाऽऽविवेशोत्पन्ना ॥ १ ॥ २ ॥

तत्र हेतुमाह—

> पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
> अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥

पीतोदकाः पीतान्युदकानि याभिस्तास्तथा जग्धतृणा जग्धानि भक्षितानि तृणानि याभिस्ता एवंभूता अपि दुग्धदोहा दुग्धा बहुवारं दोहा यासां तास्तेन बहुकृत्वः प्रसूता अत एव निरिन्द्रिया निर्गतानीन्द्रियाणि यासां ता गलितेन्द्रिया वृद्धाः स्वप्रयोजनाक्षमाः । एवंविधा या गावस्ता ददत् स यजमानस्ताँल्लोकान्गच्छति के ते लोका येऽनन्दा असमृद्धा यत्र गतानां मुख्यत्वेन कामोपभोगाभाव एवं नाम कुत्सितास्ते प्रसिद्धा लोकास्तान्स गच्छतीति संबन्धः । ननु गवां दानं विशिष्टफलदं श्रूयतेऽत्र त्वेवं किमुच्यते । सत्यं, यद्दानं सत्पात्रायानुकूलसुप-

भोगार्हं सुखप्रदं स्यात्तेन तद्दातुर्विशिष्टफलदं भवति । यत्तु तद्विपरीतं सामान्यसुखप्रदं क्लेशजनकं च तन्न तथा दुःखमिश्रस्यैव सुखस्य प्रदात् । एवं पित्रा विहितं तद्गोदानं दृष्टवन्तं नाचिकेतसं तद्विधलोकप्राप्तिरस्य मा भूदिति विवेकेन श्रद्धोक्तविधाऽऽविवेश ॥ ३ ॥

ततो येन तल्लोकप्राप्तिरस्य न भवेद्यच्छ्रेयोऽस्याऽऽत्मनश्च तदधुना साधनीयमिति भावेन—

स होवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं

तृतीयम् । तꣳ होवाच मृत्यवे त्वा ददामीति ॥४॥

स हैवं श्रद्धाविष्टः कुमारः पितरमुशन्तमुवाच । श्रेयोर्थिना त्वया सर्वमपि दानं दत्तमधुना हे तात कस्मै पुरुषाय मां दास्यसीति यदनुशिष्टोऽहं श्रेयः साधयिष्य इत्यभिप्रायः । तस्य तमभिप्रायं न विवेदातो नोत्तरं ददौ पिता । तत्प्रतिवचनमिच्छुः स तदेव तात कस्मै मां दास्यसीति होवाच । तथाऽपि तूष्णींभूतं वीक्ष्य पुनस्तदेव तृतीयं होवाच । ततस्तत्प्रश्नाभिप्रायमयं श्रेयोर्थी तत्साधन उद्युक्त इति बुद्धवान् । अत्र तꣳ ह परीत उवाचेति तैत्तिरीयाः पठन्ति परीतस्तत्प्रश्नाभिप्रायं परिज्ञातवान् । तदुपदेष्टा त्वन्नेदानीं मृत्युरेवास्तीति विज्ञाय पिता तं हैवं त्रिवारमुक्तवन्तं कुमारमुवाच मृत्यवे यमाय त्वां ददामि । इति तद्वचनं श्रुत्वा बहुवारं पृष्टः स पिता क्रुद्धः सन्नेवमुक्तवान्किमिति क्षणं तूष्णीं बभूव । ततस्तदनुरूपामेवाशरीरिणीं वाचमम्बरे श्रुत्वा तच्छंकानिवृत्तिमवाप्यानन्दनिर्भरः सन्नपि मृत्युशङ्कां मन्वानः पुनरुवाच । एतन्नाचिकेतेऽभिहितमस्त्यग्रे वक्ष्यते ॥ ४ ॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।

किꣳ स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥५॥

अहमत्र बहूनां जनानां मध्ये प्रथमो मुख्यत्वेनाग्रः सन्नेमि गच्छामि तथा बहूनां मध्यमो मध्ये भवो मध्यमस्तैः परिवृतः सन्नेमि न पृष्ठतो न चैकाकी । अथ चेद्यमाय दास्यसि तर्हि किं स्विन्नु तद्यमस्य कर्तव्यमस्ति तथा तव सौम्यं वर्तते तथा वोग्रं वा । किं तत् । यन्मयाऽद्य कार्यं करिष्यति तत्किं स्विद्यमस्य कर्तव्यमस्ति तत्साधु ब्रूहि ॥ ५ ॥

इति बालदशानुरूपं महत्त्वावेक्षिणस्तस्य वचनं श्रुत्वा विवेकोत्पादनाय किंचिद्वैराग्यपूर्वकं वचनं पितोवाच—

अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः॥६॥

यथा येन प्रकारेण प्राचीना जना अवर्तन्त तदनुपश्यान्वालोच्य तथा चापर इदानींतना यथाऽवर्तन्त तदपि प्रतिपश्य प्रत्यालोच्याऽऽत्मन्यपि तथाभावो विज्ञेयः । स कथमित्यत्र सदृष्टान्तमाह—मर्त्योऽयं मनुष्यः सस्यमिव व्रीह्यादिवत्पच्यते पक्को भवति । यथा सस्यं प्ररुह्य विस्तारं लब्ध्वाऽन्ते पक्कं भूत्वा प्रशुष्य विनश्यति तथाऽयमपि मातृकुक्षेर्जननं प्राप्य वर्धते तरुणत्वेन विपरिणमत उपतापेन जरसा वा परिपक्कः क्षीणो भूत्वा विनश्यति तथा सस्यमिव पुनर्जायते । यथा सस्यं स्वीयबीजावापादि-पत्रपुष्पादिविस्ताररूपकर्मयोगेण बीजसंग्रहं प्राप्य तद्योगेन पुनरन्यशरीरेणोत्पद्यत एवमयमपि तद्देहेनान्यदेहारम्भकक्रियमाणकर्मसंग्रहेण पुनर्जायतेऽन्यदेहेन पुनर्जननं प्राप्नोति । तस्मान्नित्यस्याऽऽत्मनः स्वकृतकर्मयोगेण नानाविधदेहान्तरप्राप्तिर्भवति तेन तान्यनित्यानि विनश्वराण्यनात्मभूतान्यतस्तत्राऽऽत्मबुद्ध्या मानपूजापेक्षको न भवेत् । अतस्त्वं तद्विषयां शङ्कां मा कार्षीः ॥ ६ ॥

तर्हि किं मयाऽधुना कार्यं तत्राऽऽह—

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैताᳫं शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥७॥

वैश्वानरो वैश्वानर इव वैश्वानरोऽतिथिः । यथा वैश्वानरो देवबुद्ध्या पूज्यस्तेन बहुपुण्यप्रदो नित्यक्षुधः स्वप्रकाशस्तमसो विनाशकस्तथा ब्राह्मणोऽतिथिरपि विद्याविनयतपोयोगेन नित्यं सत्त्वप्राधान्येन प्रकाशवांस्तेन परपापविनाशक आराधनेन पुण्यप्रदो नित्यं क्षुधावान् । एवं सोऽज्ञातगोत्रनामा ब्राह्मणोऽतिथिर्गृहान् गृहाणि यजमानानां प्रविशति यः । तस्यातिथेरेतां शास्त्रदृष्टां शान्तिं पाद्यार्घ्यान्नादिरूपां कुर्वन्ति गृहिणः । अतः स मृत्युरस्मिँल्लोके वसन्नस्मदादिवत्सदाचारशीलोऽस्ति तं प्राप्य त्वं वैवस्वतोदकं वैवस्वतस्य यमस्योदकं पाद्यमर्घ्यं चान्नादि च हर गृहाण । अतिथिरूपेण तद्गृहं गच्छ । अस्मिन्नेव प्रसङ्गे मृत्यवे त्वा ददामीत्यतः परमेतावदवधिकं तैत्तिरीया नाचिकेते पठन्ति तदत्र व्याख्यायते प्रसङ्गपरिज्ञानाय । “ तᳫं ह स्मोत्थितं वागभिवदति गौतमकुमारमिति, स होवाच, परे हि मृत्योर्गृहान्, मृत्यवे वै त्वाऽदा-

मिति, तं वै प्रवसन्तं गन्तासीति होवाच, तस्य स्म तिस्रो रात्रीरनाश्वान्गृहे वसतात् । स यदि त्वा पृच्छेत्, कुमार कति रात्रीरवात्सीरिति, तिस्र इति प्रतिब्रूतात् । किं प्रथमाᳪ रात्रिमाश्ना इति, प्रजां त इति, किं द्वितीयामिति, पशूᳪस्त इति, किं तृतीयामिति, साधुकृत्यां त इति, तं वै प्रवसन्तं जगाम, तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवास, तमागत्य पप्रच्छ, कुमार कति रात्रीरवात्सीरिति, तिस्र इति प्रत्युवाच, किं प्रथमाᳪ रात्रिमाश्ना इति, प्रजां त इति, किं द्वितीयामिति, पशूᳪस्त इति, किं तृतीयामिति, साधुकृत्यां त इति"। तं ह गौतमकुमारं गौतमस्य कुमारं नचिकेतसं श्रेयःसाधन उत्थितमुद्युक्तं वीक्ष्य वागशरीरिणीति वक्ष्यमाणप्रकारेण प्रतिशासनरूपं स्माभिवदत्यभ्युदितवती । गौतम औद्दालकिरारुणिरित्युशतोऽपराणि नामधेयानि । स ह वाचाभिशासनं श्रुतवान्गौतमः पुत्रमुवाच । मृत्योर्वैवस्वतस्य गृहान्परेहि परागच्छ । मृत्यवे वै मृत्यव एव त्वा त्वामदां दत्तवानहमिति । तं वै पित्रेत्युक्तं प्रवसन्तं प्रवासितुं प्रस्थितं कुमारं गन्तासि गमिष्यसीत्युक्त्वा पुनर्होवाच । तस्य स्म मृत्योर्गृहे तिस्रो रात्रीरनाश्वाननश्नन्नभक्षयन्वसताद्वस । स मृत्युर्यदि त्वा त्वां पृच्छेत् । किं हे कुमार कति रात्रीरवात्सीरुषितवांस्त्वमिति पृच्छेत् । तर्हि तिस्रो रात्रीरवात्समिति प्रतिब्रूतात्प्रत्युत्तरं देहि । स यदि त्वा पृच्छेत्किं प्रथमां रात्रिमाश्ना अशितवांस्त्वमिति तर्हि प्रजां ते त्वदीयामाश्नां यदहं प्रथमां रात्रिमनश्नन्नवात्सं तेन ते प्रजा नश्यति तवैव प्रजां त आश्नामिति प्रतिब्रूतात् । पुनः स यदि त्वा पृच्छेत् । किं द्वितीयां रात्रिमाश्ना इति तर्हि पशूंस्ते त्वदीयानाश्नामिति प्रतिब्रूतात् । भावस्तु स एव । पुनः स यदि त्वा पृच्छेत्किं तृतीयां रात्रिमाश्ना इति तर्हि साधुकृत्यां साध्वीं कृत्यां क्रियां ते त्वदीयामाश्ना इति प्रतिब्रूतात्, इति । इति पित्राऽनुशिष्टः स कुमारो नचिकेतास्तं वै मृत्युं वैवस्वतं प्रवसन्तं स्वलोकात्प्रोष्यास्मिँल्लोके वसन्तं ग्रामाद्ग्रामान्तरं पृच्छञ्जगाम । तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवासोषितवान् । तमुषितवन्तमागत्य पप्रच्छ मृत्युर्हे कुमार कति रात्रीरवात्सीरिति । इति मृत्युना पृष्टः कुमारस्तिस्रो रात्रीरवात्समिति प्रत्युवाच । तच्छ्रुत्वा तद्योग्यत्वपरीक्षणाय स मृत्युः पप्रच्छ किं प्रथमां रात्रिमाश्ना इति, कुमारः प्रजां त आश्नामिति प्रत्युवाच, पुनर्मृत्युः पप्रच्छ किं द्वितीयां रात्रिमाश्ना इति, कुमारः पशूंस्त आश्ना-

मिति प्रत्युवाच पुनर्मृत्युः पप्रच्छ किं तृतीयां रात्रिमाश्ना इति, कुमारः साधुकृत्यां त आश्नामिति प्रत्युवाच ॥ ७ ॥

इत्येतद्व्याख्याय पुनर्वल्ल्यनुस्त्रियते—

आशां प्रतीक्षे संगतꣳ सूनृतां चेष्टापूर्ते
पुत्रपशूꣳश्च सर्वान्। एतद्वृङ्क्ते पुरुषस्याल्प-
मेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥

तिस्रो रात्रीर्यदवात्सीद्गृहे मे अनश्नन्ब्रह्म-
न्नतिथिर्नमस्यः। नमस्ते अस्तु ब्रह्मन्स्वस्ति
मे अस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥

हे कुमाराहं प्रत्यहमाशां दिशामतिथिरागच्छति वा न वेति प्रतीक्षे तत्प्रतीक्षां करोमि तथाऽतिथिमागत्य संगतं सम्यक्प्रकारेण गतं प्राप्तं प्रतीक्षे। तर्हि त्वं दैवादतिथिर्लब्धोऽसि तत्साध्वेव जातं तस्य पुरुषस्याल्पमेधसोऽल्पज्ञानस्य सूनृतां च सत्यां सुललितां वाचं तपोरूपामिष्टापूर्ते इष्टं यजनं श्रौतं कर्म पूर्तं स्मार्तं पुत्रपशूंश्च पुत्रान्पशूंश्च सर्वानित्येतत् सोऽतिथिर्वृङ्क्ते स्वी कुरुते, कस्य, यस्याल्पमेधसः पुरुषस्य ब्राह्मणोऽतिथिरनश्नन्वसति। न सदाचारशीलस्य ज्ञानविज्ञानसंपन्नस्य हे ब्रह्मन्नचिकेतो यत्तिस्रो रात्रीर्मे मम गृहेष्वनश्नन्नवात्सीरुषितवान्। तेन न मम प्रत्यवाय इति भावः। तथाऽपि गृहस्थधर्मपालनार्थं किंचिच्छृणु। त्वमतिथिरतो नमस्यो नमस्काराार्हः। तस्मान्नमस्ते तुभ्यमस्तु मदीयं तेन स्वस्ति मेऽस्तु तस्मात्कारणात्तिस्रो रात्रीरनशनानि प्रति त्रीन्वरान्वृणीष्व तेन मे प्रत्यवायः परिहृतः स्यादित्युवाचेति समन्वयः ॥८॥९॥

वरान्वृणीष्वेति च्छन्दितो नचिकेता उवाच—

शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौ-
तमो माऽभि मृत्यो। त्वत्प्रसृष्टं माऽभिवदे-
त्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥

हे मृत्यो गौतमो मे पिता यथा शान्तसंकल्पः श्रेयःसाधने विषये शान्ताः संकल्पा मानसा यस्य स शान्तसंकल्पः स्याद्भवेत्। यत्सर्वश्रेयोऽस्ति तत्तेन प्राप्तं भवेत्। तेन सुमना नित्यं तदनुसंधानेन शोभनं

मनो यस्य स तथा माऽभि मां प्रति वीतमन्युर्विगतक्रोधः स्याद्यस्मिन्यस्मिन्काले जिज्ञासया यं यं प्रश्नं करिष्ये तदा तदा प्रसन्नत्वेन तस्य तस्य प्रतिवचनं दद्यात् । त्वत्प्रसृष्टं त्वया प्रसृष्टं विसृष्टं मा मां विद्याजातमभिवदेत्प्रतीतः प्रहृष्टः सन् । तथा भवत्वित्येतदेतं त्रयाणां वराणां मध्ये प्रथमं वरं वृणे ॥ १० ॥

इति नचिकेतसा कृतं वरवरणं श्रुत्वा मृत्युरुवाच—

यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारु-<br>णिर्मत्प्रसृष्टः । सुखꣳ रात्रीꣳ शयीत वीत-<br>मन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम्॥ ११॥

यथा पुरस्तात्पूर्वस्मिन्काले बालत्वावस्थायां प्रतीतः प्रहृष्ट आसीत्तथा मत्प्रसृष्टो मया प्रसृष्टः कृतः सन्नौद्दालकिरुद्दालकस्यापत्यमौद्दालकिरारुणस्य गोत्रापत्यमारुणिर्भविता भविष्यति । तथा च सुखं यथा स्यात्तथा रात्रिं शयीत सर्वचिन्ताभयसंकल्पशून्यत्वेन शेताम् । तथा वीतमन्युश्च नित्यं सत्त्वसमाविष्टश्चास्तु । त्वां मृत्युमुखान्मृत्युर्मारकः पीडकत्वेन संसारस्तन्मुखात्प्रमुक्तं परविद्यासंप्राप्त्या ददृशिवान्दृष्टवान्भवतु ॥ ११ ॥

इति प्रश्नाभिप्रायेण वरमुक्त्वा तस्य शान्तिं सुशीलत्वं च विज्ञाय प्रतीतः सन्पुनर्मृत्युरुवाच—

स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं<br>जरया बिभेषि । उभे तीर्त्वाऽशनायापि-<br>पासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥

अस्मिन्नेव लोके त्वं संप्राप्तमहत्त्व इत्येव न किंचित्त्वितो गतस्य ते स्वर्लोके न भयं किंचन किंचिदप्यस्ति । तत्राप्यपरवशः सर्वैर्मान्यो भविष्यसि न तत्र त्वं जरया वार्धकेन बिभेषि भेष्यसि उभे अशनायापिपासे अशनस्यान्नस्येच्छां पिपासां च जलं पातुमिच्छां तीर्त्वा शोकातिगः स्त्रीपुत्रवित्तविनाशरूपं शोकमतीत्य गत एवं सन्स्वर्गे लोके मोदते मोदिष्यसे ॥ १२ ॥

इति मृत्युप्रत्तं वरं वृत्वा पुनरवृणुत—

स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं
श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं
भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥

हे मृत्यो स त्वमग्निमग्रणीं सर्वकारणत्वेनाऽऽदिभूतं स्वर्ग्यं स्वर्गे विषये साधु साधनं यज्ज्ञानादेव विना साधनेन सर्वलोकप्राप्तिरस्ति तमध्येषि स्मरसि जानासीति मया श्रुतमतस्तं स्वर्ग्यमग्निं मे मह्यं श्रद्दधानाया-नन्यभावेन शरणागताय प्रब्रूहि । येन स्वर्ग्येणाग्निना स्वर्गे ब्रह्मभुव-नाख्ये लोकास्तद्रूपविज्ञानिनो जना अमृतत्वं जन्ममरणाभावेनापुनरा-वृत्त्या मोक्षं भजन्ते प्राप्नुवन्ति तं मेऽग्निं प्रब्रूहि । इत्येतद्द्वितीयेन वरेण वृणे वृणीय ॥ १३ ॥

इति प्रार्थितः स मृत्युरुवाच—

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं
नचिकेतः प्रजानन् ॥ अनन्तलोकाप्तिमथो
प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥

प्र ते ब्रवीमि प्रब्रवीमि ते तुभ्यमग्निं स्वर्ग्यं तदग्ने रूपमु निश्चयेन मे मम वचनान्निबोध जानीहि । हे नचिकेतस्तं त्वया पृष्टं स्वर्ग्यमग्निं प्रजानन्प्रमाननन्तलोकाप्तिं न विद्यमानोऽन्तोऽवसानं यस्य तस्य लोक-स्याऽऽप्तिं प्राप्तिं तत्र च प्रतिष्ठां विन्दते लभते । त्वमेतमग्निं गुहायां निहितं विद्धि जानीहि । तत्रैव तज्ज्ञानं संभवति न बहिः ॥ १४ ॥

इति प्रतिज्ञाय किं कृतवांस्तदुच्यते—

लोकादिमग्निं तमुवाच तस्मै या इष्टका
यावतीर्वा यथा वा ॥ स चापि तत्प्रत्यवद-
द्यथोक्तमथास्य मृत्युः पुनराह तुष्टः ॥ १५ ॥

तं लोकाप्तिं स्वर्लोकाप्तिहेतुमग्निं तस्मै नचिकेतस उवाच । तत्र का गुहा कथं तत्रायं प्रतिष्ठितः किं तत्रैव तज्ज्ञानं कथं चेत्तत्रोच्यते । हृत्पुण्डरीकं पुरमध्यसंस्थमिति नवद्वारत्वादिदं शरीरं पुरं तस्यान्तर्यद्धृ-त्पुण्डरीकम्, 'अधोनिष्ठ्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति' सैव गुहा

तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमिति तदाकाशे सोऽग्निरंशत्वेन वर्ततेऽतस्तत्रैव तज्ज्ञानं तन्मयत्वेनावस्थानरूपोपासना च। अत एवोच्यते तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता। नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा। तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्। इति। यस्याग्नेरेवंविधा चिन्मयी शिखा स एवाग्निर्हृत्पुण्डरीकगुहायां प्रतिष्ठितो विज्ञेयः। किंविधा सा शिखा। अणीयोर्ध्वोर्ध्वभागेऽणीयस्यणूपमा। 'तत्परं ब्रह्म' यावत्तावच्चिन्मयं न तत्परिच्छिन्नं तत्रात एवोच्यते 'प्रज्ञानं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति। सर्वमपि परं ब्रह्म चिन्मयमेवास्ति तेन मूलभागे व्यापिका सा शिखा सैव गुणमूलं गुणप्रधानत्वेनाग्रे गुणपरिच्छिन्ना जाता ततो देहयोगेन देहपरिच्छिन्ना ततः करणयोगेन तत्सूक्ष्मद्वारपरिच्छिन्ना वर्ततेऽणीयोर्ध्वा। नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। यथा सजलमेघपटलस्थविद्युल्लेखा भास्वरा भास्वती स्वप्रकाशत्वात्तेन मार्गादिप्रदर्शनेन प्रयोजनसिद्धिकरी तथेयमपि प्रज्ञानशिखा स्वप्रकाशाऽप्यज्ञानान्यथाज्ञानजडदेहावृताऽपि प्रपञ्चे तद्वद्विषयानुभवकरी व्यवहारोपयुक्ता। तथा प्रयोजनकर्यपि न तावत्यतिसूक्ष्मा। कथम्, नीवारशूकवत्तन्वी यथा नीवारशूकमाश्रये स्तम्बे तावदेव वर्ततेऽग्रभागेऽणूपमं तथेयमप्युक्तप्रकारेण प्रपञ्चेऽतिसूक्ष्मत्वेन वर्तमाना। पीता प्रपञ्चप्रकाशत्वेन रजःप्रधानत्वात्। भास्वती स्वप्रकाशाऽणूपमाऽतिसूक्ष्मपिपीलिकाद्यवयवप्रकाशनेन तावती भवति। एवंविधायास्तस्याः शिखाया मध्ये परमात्मा व्यस्थितः। यत्परमात्मतत्त्वं तदधिष्ठानसत्तया तस्यां य आत्मभावस्तदेव तस्मात्स तच्छिखायां वर्ततेऽत एव तदुपाधिरित्युच्यते। स परमात्मा ब्रह्म ब्रह्मा तद्रजःप्रधानत्वात्। स शिवस्तमःप्रधानत्वात्। स हरिस्तमःपूर्वकसत्त्वप्रधानत्वात्। सेन्द्रः स इन्द्रस्तदुपलक्षिताः सर्वेऽपि हिरण्यगर्भांशा देवाः स एव तेषां तदवयवत्वात्। एवं सर्वमपि तच्छिखान्तर्वर्त्येवास्ति। तेन स केवलस्तन्मय एव स्यादतः सोऽक्षरः परमः परमं सर्वोत्कृष्टमक्षरं स एवास्ति तस्य तदुपाधित्वात्। न मुख्यं रूपमुपाधिर्भवति परं ब्रह्मैव ज्ञेयम्। अतः स स्वराट् तेन रूपेण स्वसत्तया स्वयमेव राजते स्वराट्। तस्माद्यत्परं ब्रह्म तदेव मायोपाधित्वादीशस्वरूपं

य ईश्वरः परमात्मा स एवाग्रेऽग्निवाय्वादित्यरूपेणाऽऽत्मानं त्रेधा व्यकुरुत। उक्तं च 'स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयम्'। इति। तेनायमग्निः परमात्मा परं ब्रह्मैवास्त्यतोऽग्रणीः सर्वजगत्कारणं सः। एवंविधा शिखा यस्याग्नेस्तस्य परब्रह्मरूपस्याऽऽत्मनो हृदयगुहायां कथमनुभवोऽपरोक्षत्वेन। यावत्सा शिखा बहिर्मुखा प्रपञ्चज्ञानेन तावन्न तदनुभवस्तया यदा च सर्वसङ्गमुक्तत्वेनाऽऽश्रये तन्मयत्वेनावतिष्ठते तदा परब्रह्मात्मविज्ञानं संभवति। तस्माद्बाह्यविषयान्बहिः कृत्वा तत्संबन्धिनीं तां ततः प्रत्यावर्त्य देहासङ्गत्वेन करणासङ्गत्वेनान्तर्हृदये दहराकाशे नयते चेत्तदा तद्दृष्ट्या सर्वाभावदर्शनं चिदाकाशनिष्ठत्वमात्मनः। तत्र यथा भावो दृश्यस्तथाऽभावोऽपि। तस्मात्तदनुसंधानत्यागेन तन्निष्ठं ज्ञानं प्रत्यावर्त्याऽऽत्मनिष्ठं कृत्वा ज्ञानाज्ञानान्यथाज्ञाननिरासेन निर्विकल्पत्वेन तन्मयत्वेन स्वसंवेद्यत्वेन स्वप्रकाशत्वेनावस्थानं सैव सच्चिदानन्दमयी तयैव परब्रह्मानुभवोऽपरोक्षत्वेन तत्र भवति। एवमग्निं तस्मै नचिकेतस उवाच यमः। तस्यैवैतस्य यज्ञीयस्याग्नेर्या इष्टका लोष्टमय्यो भृष्टा यावतीर्वा यावत्यो वा यत्संख्याका यथा वा यादृश्यो वा, इत्येतत्सर्वं तस्मा उवाच। स चापि नचिकेतास्तदुपदिष्टमग्ने रूपं परोक्षत्वेन विज्ञाय यथाविदितं प्रत्यवदत्प्रत्युदितवान्॥ १५॥

अथानन्तरं मृत्युस्तस्मिन्नचिकेतसि तुष्टः सन्पुनराह—

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य<br>
ददामि भूयः। तवैव नाम्ना भविताऽयमग्निः<br>
सृङ्कां चेमामनेकरूपां गृहाण॥ १६॥

प्रीयमाणः प्रीयते तर्प्यतेऽसौ प्रीयमाणः स महात्मा मृत्युस्तं नचिकेतसमब्रवीत्। किं वरं तव तुभ्यमिहाद्यास्मिन्काले भूयः पुनर्ददामि। कस्तवैव नाम्ना नचिकेतसा विदितोऽतो नचिकेतसोऽयं नाचिकेत इत्ययमग्निर्भविता भविष्यति सृङ्का च सृजति सृङ्का तां नानासिद्धिप्रदां मन्त्रमयीमिमां मया प्रत्तामनेकरूपामनेकानि रूपाण्यनेकवित्तनिर्माणेन यस्यास्तां गृहाण॥ १६॥

तं नाचिकेतमग्निं स्तौति स्म—

त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्त-

रति जन्ममृत्यू । ब्रह्मयज्ञं देवमीड्यं विदित्वा
निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १७ ॥

त्रिणाचिकेतस्त्रयो नाचिकेता यस्य स त्रिनाचिकेतः । एते त्रयो नाचिकेता यजुर्वेदे काठकेषु प्रसिद्धा नाचिकेताग्नेः प्रतिपादनेन । यथा भारतानां प्रतिपादनेन भारतम् । स त्रिभिर्नाचिकेतैर्भविष्यद्भिः संधिं परस्परेण संधानमेत्य प्राप्य संधायेत्यर्थः । त्रिकर्मकृत्त्रयाणां कर्माणि करिष्यति । त्रिकर्मकृत्सञ्जन्ममृत्यू तरति तरेत्तरिष्यति । किंच ब्रह्मयज्ञं ब्रह्मभिर्वेदैरिज्यते ब्रह्मयज्ञस्तं देवं दीप्यमानं स्वप्रकाशमीड्यं स्तुत्यं विदित्वा निचाय्य च पूजयित्वेमामेवंविधामत्यन्तमत्यन्तामुत्कृष्टां शान्तिमेतीयादेष्यति प्राप्स्यति ॥ १७ ॥

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳ-
श्चिनुते नाचिकेतम् । स मृत्युपाशान्पुरतः
प्रणोद्य शोकातिगो मोदते स्वर्गलोके॥१८॥

य एवमुक्तप्रकारेण विद्वांस्त्रिणाचिकेतः पुमानेतत्त्रयं त्रयोऽवयवा यस्य तत्त्रयं विदित्वा नाचिकेतमग्निं चिनुते चिन्वीत नाचिकेताग्निचयनं विदधीत स पुमान्पुरतः पुरस्तान्मृत्युपाशान्मृत्योः पाशान्प्रणोद्य च्छित्त्वा शोकातिगः सन्स्वर्गलोके मोदते मोदेत ॥ १८ ॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा
द्वितीयेन वरेण । एतमग्निं तवैव प्रक्ष्यन्ति
जनासस्तृतीयं वरं नचिकेतो वृणीष्व॥१९॥

हे नचिकेत एष ते तव स्वर्ग्यः स्वर्गे साधुः स्वर्ग्योऽग्निः, कः, यमग्निं त्वं द्वितीयेन वरेणावृणीथा वृतवानसि । एतमग्निं नाचिकेतं तवैव त्वामेवान्यत्रैतत्कालपर्यन्तमविद्यमानत्वात्प्रक्ष्यन्ति पृच्छां करिष्यन्ति जनासो जनाः । अतः परं हे नचिकेतस्तृतीयं वरं वृणीष्व ॥ १९ ॥

एवं मृत्युनोक्तो नचिकेता अग्ने रूपं तद्वचनाद्विज्ञायापि लौकिकवादमनुसृत्य पप्रच्छ—

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २० ॥

येयं मनुष्ये प्रेते विचिकित्सा संशयोऽस्ति । किंविधा सा । अयं मृतोऽस्तीत्येक आहुर्ब्रुवन्ति नायमस्तीत्येक आहुः । इत्येवंरूपा विचिकित्साऽस्ति । कथं सा । एके लौकिका जना अयमात्मा मृतो देहं त्यक्त्वा गत इत्याहुः । अन्ये विद्वांसोऽस्तीत्याहुः स 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इति । तदपि सप्रमाणमेव नान्यथेदमपि च यज्जन्ममरणे प्रत्यक्षत्वेनानुभूयेते तेन गमनागमने अपि । तस्माज्जीवरूपं कथमस्ति गच्छति वा न वा । एतदुक्तविचिकित्सानिरसनं त्वयाऽनुशिष्टोऽहं विद्यां जानीयाम् । एष मयैवं प्रार्थ्यमानो वराणां मध्ये तृतीयो वरः । तं मे ब्रूहि ॥ २० ॥

इति प्रार्थनं श्रुत्वा मृत्युरुवाच—

देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञे-
यमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व
मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥

अत्रास्मिन्विषये त्वत्पृष्टे पुरा पूर्वस्मिन्काले देवैरपि विचिकित्सितं संशयितम् । तद्विज्ञानार्थं महान्यत्नः कृतस्तथाऽपि तेषां न हि सुविज्ञेयं सुविज्ञातुं शक्यमासीत् । आत्मा देहं त्यक्त्वा गच्छतीति चेत्तदा तस्य देहपरिमितत्वं वाच्यं स्विदणुत्वम् । चेदणुस्तस्य शरीरैकदेशावस्थायित्वेनेतरशरीरगतसुखदुःखज्ञानं न स्यात् । तेन देहपरिमितश्चेदुत्पत्तिकाल एव शरीरस्य पूर्णत्वेन भाव्यं बालशरीरे तत्प्रमितत्वेनाग्रे वर्धमानं शरीरं निर्जीवं स्यात् । तदेकस्य नानायोनिसंक्रमणं न स्यात् । गजो गज एव पिपीलिका पिपीलिकैवेति जातं नु । अथ व्यापकश्चेत्तदेकस्य नानाशरीरान्तर्गतत्वेन तत्संबन्धि सुखदुःखज्ञानं संभवेत् । एवं तु न दृश्यते तदा न व्यापकोऽपि । तस्मात्कथं स इत्येतन्न सुविज्ञेयम् । अत एष धर्मोऽयं कथमस्तीति ज्ञानमार्गोऽणुः सूक्ष्मो दुर्बोधत्वात् । अत एवोच्यते 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । तस्मान्नचिकेतोऽस्माद्वरादन्यं वरं वृणीष्व । मा मोपरोत्सीर्मा मामुपरो-

त्सीर्मा मदुपरोधं कार्षीः । अति मा सृजैनमेनं वरप्रार्थनेनोपरुन्द्धं मा मामातिसृजातिमुञ्च ॥ २१ ॥

इत्येवं प्रत्याख्यानं श्रुत्वा नचिकेता उवाच—

देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो
यन्न सुज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो
न लभ्यो नान्यो वरस्तुल्य एतैश्च कश्चित् ॥ २२ ॥

देवैरप्यत्र विचिकित्सितं किल सत्यं कुतः हे मृत्यो यत्त्वं च न सुज्ञेयमात्थ ब्रवीषि तस्माद्विचिकित्सितमेव सत्यं अस्य च वरस्य वक्ता तादृक्त्वत्समो न लभ्यो नास्त्येव चेदेतं वरमसुविज्ञानं मत्वाऽन्यो वरः प्रार्थनीयस्तर्हि न च कश्चिदन्यो वर एतैरेतेन वरेण तुल्योऽस्ति । अतस्त्वमेव ज्ञाताऽसि तं मे ब्रूहि ॥ २२ ॥

इत्युपरोधं श्रुत्वा पुनर्मृत्युरुवाच—

शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्ति-
हिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं
च जीव शरदो यावदिच्छसि ॥ २३ ॥

शतं शतवर्षपर्यन्तमायुर्येषां ताञ्छतायुषः पुत्रपौत्रान्पुत्रान्पौत्रांश्च वृणीष्व । तथा बहून् पशून्हस्तिहिरण्यं हस्तिनो हिरण्यं च बह्वश्वांश्च बहून्भूमेः संबन्धि महद्बृहदायतनं स्थानं क्षेत्रादिरूपं वृणीष्व । स्वयं च त्वं च यावज्जीवितुमिच्छसि तावतीः शरदो वर्षाणि जीव ॥ २३ ॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिर-
जीविकां च । महाभूमौ नचिकेतस्त्वमेधि
कामानां त्वा कामभाजं करोमि ॥ २४ ॥

यदि त्वमेतत्तुल्यमेतेन वरेण तुल्यमन्यं वरं मन्यसे तर्हि तमन्यं वरं वृणीष्व हे नचिकेतस्त्वं महाभूमौ महत्यां भूमौ स्वर्गरूपायामेधि निवस तत्र कामानां कामयन्त इति कामास्तेषां कामयितृणां मध्ये त्वा त्वां कामभाजं काममतिशायितं भजति कामभाक्तं करोमि ॥ २४ ॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामां-
श्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः
सतूर्या न हीदृशा लम्भनीया मनुष्यैः॥२५॥

ये ये कामा मर्त्यलोके मनुष्यलोके दुर्लभाः सन्ति तान्सर्वान्कामां-श्छन्दत इच्छातः प्रार्थयस्व याचस्व । तथेमा रामाः स्त्रियः सरथाः सह रथैः सरथा रथारूढाः सतूर्याः सह तूर्यैः सतूर्याः प्रार्थयस्व । न हीदृशाः स्त्रियो मनुष्यैर्लम्भनीया लभनीया लब्धुं शक्याः । अतस्ताः प्रार्थ-यस्व ॥ २५ ॥

आभिर्मत्प्रत्ताभिः परिचारयस्व नचि-
केतो मरणं माऽनुप्राक्षीः ॥ २६ ॥

आभिः प्रत्यक्षाभिर्मत्प्रत्ताभिर्मया प्रत्ताभिः स्त्रीभिरात्मानं परिचार-यस्वाऽऽत्मपरिचर्यां कारय । हे नचिकेतस्त्वं मरणं माऽनुप्राक्षीर्मा मर-णानुप्रश्नं कार्षीः । यतस्तज्ज्ञानं परमाणुतुल्यमेव ॥ २६ ॥

इति मृत्युवचनं श्रुत्वा पुनर्नचिकेता उवाच—

श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां
जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव
तवैव वाहास्तव नृत्तगीते ॥ २६ ॥

हेऽन्तक मृत्यो यदेतत्प्रत्यक्षं सर्वैरनुभूयमानं श्वोऽपरेद्युर्भवितारो भावा अद्यतनं मर्त्यस्य मनुष्यस्य सर्वेन्द्रियाणां सर्वेषां श्रोत्रादीनां वागादीनां चेन्द्रियाणां तेजो जरयन्ति जीर्णं क्षीणं कुर्वन्ति । एवं प्रत्यहं जरणेनान्ते केवलक्षीणं भवत्यतः का तत्र विनश्वरेऽत्यासक्तिः । अल्पकालजीविन एतदुक्तं, भवतु बहुकालजीविना तु किं न ते प्रार्थ-नीया इत्यत्राऽऽह—सर्वमपि पूर्णमपि जीवितं जीवनमिहत्यममुत्रत्यं चाल्पमेव स्वतो महतामुपरिष्टाद्वर्तमानानां जीवितस्य भूयस्त्वश्रवणात् । अतस्ते वाहा अश्वप्रभृतयस्तवैव त्वदीया एव सन्तु तथा नृत्तगीते नर्तन-गाने तवैव स्ताम् ॥ २६ ॥

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे

वित्तमद्राक्ष्म चेत्त्वाम् । जीविष्यामो यावदी-
शिष्यसि त्वं वरस्तु मे वरणीयः स एव॥२७॥

न मनुष्योऽहं वित्तेन तर्पणीयः । कुतः । चेत्त्वामद्राक्ष्म दृष्टवन्तो वयं तर्हि वित्तं लप्स्यामह एव का तस्य दुर्लभता । अतो न वित्तेन मनुष्यस्तर्पणीयः । यावत्त्वमीशिष्यस्यस्माकमीशिता रक्षिता भविष्यसि तावज्जीविष्याम एव वयं का तत्राचिरजीवित्वशङ्का । तु परं तु मे मम स एव प्रार्थितो वरो वरणीय इत्यध्यवसायः ॥ २७ ॥

इति नचिकेतसो वचनमाकर्ण्य मृत्युरुवाच—

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वध-
स्थः प्रजानन् । अभिध्यायन्वर्णरतिप्रमोदा-
न्नातिदीर्घे जीविते को रमेत ॥ २८ ॥

जीर्यतीति जीर्यन्वयोहानिं प्राप्नुवन्मर्त्यो मनुष्यः । क्वधस्थः कुः पृथिवी तद्रूपेऽधोऽधरप्रदेशे स्थितः प्रजानन्प्रकर्षेणासंदिग्धतयाऽऽत्मनो जीर्यत्वं मर्त्यत्वं क्वधस्थत्वं च जानन्दैवयोगेनाजीर्यतां न जीर्यन्त्यजीर्यन्तस्तेषां निर्जरसाममृतानाममरणानामजीर्यतोऽमृतान्स्वरुपरिष्टात्स्थितान्समुपेत्य संप्राप्य तेषाममृतानां वर्णरतिप्रमोदान्वर्णं विशिष्टं रतिं च प्रमोदं चाभिध्यायन्नभिचिन्तयन्कोऽतिदीर्घे दैवशतसंवत्सरपर्यन्तं जीविते न रमेत रमेतैव । अतस्तथा जीवितं तथा वर्णरतिप्रमोदान्प्रार्थयस्व ॥ २८ ॥

इति मृत्युवचनं श्रुत्वा पुनर्नचिकेता उवाच—

यस्मिन्निदं विचिकित्सितं मृत्यो यः
सांपराये महति ब्रूहि नस्तत् ॥ २९ ॥

हे मृत्यो इदं प्रत्यक्षं यस्मिन्विषये विचिकित्सितं देवादिभिः । यश्च वरो महति सांपराये संपैरत्यत्र संपरायो मरणं संपराय एव सांपरायस्तस्मिन्वर्तते । उक्तं च त्वया मरणं माऽनुप्राक्षीरिति । तत्तमेवं वरं नोऽस्मभ्यं ब्रूहि ॥ २९ ॥

इति नचिकेतसो वचनमाकर्ण्य मृत्युरुवाच—

यं यं वरं गूढमनुप्रविष्टो नान्यं
तस्मान्नचिकेता वृणीते ॥ ३० ॥

हे नचिकेतः पुरुषोऽयं परमुत्कृष्टं गूढं भावमनुप्रविष्टोऽनुप्राप्तस्तस्मादन्यं वरं न वृणीषे । अतः परं तं तुभ्यं ददामि ॥ ३० ॥

इति श्रीमदादिगुरुदत्तात्रेयदिगाम्बरानुचरविरचिते ज्ञानकाण्डे
कठवल्ल्युपनिषदर्थप्रकाशे प्रथमा वल्ली
व्याख्याता ॥ १ ॥

---

इति तद्वचनादभिप्रायं विज्ञायायं सच्छिष्य उपदेशार्ह इति मत्वा प्रीतः संस्तदधिकारस्तुत्यर्थं मृत्युरुवाच—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं
सिनीतः । तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥

श्रेय उक्तकर्माचरणमन्यदस्ति प्रेयसः । उतैव च प्रेयोऽपि स्त्रीपुत्रवित्तादिपदार्थरूपमन्यच्छ्रेयसः । ते उभे श्रेयःप्रेयसी नानार्थे भोगसाधनभूते पुरुषं सिनीतो बध्नीतः । तत्र प्रेयोऽहंममत्वयोगेन श्रेयस्तूक्तफलवासनायोगेन । तथाऽपि श्रेय आददानस्य साधु शोभनं भवति । य उ यश्च प्रेयो वृणीते सोऽर्थात्परमार्थाद्भोगसाधनरूपाच्च हीयते त्यज्यते तस्मादहंममत्वपरित्यागेन प्रेयो हित्वा श्रेय एवाऽऽचरणीयम् । ननु ते उभे पुरुषं सिनीत इत्युच्यतेऽतः श्रेयसोऽपि त्यागः किं न विधेयः । न, तदाचरणप्रवृत्तिनिमित्तभूता रोचनार्था फलश्रुतिः । अतस्तत्त्यागेन कृतं कर्म मोक्षोपयुक्तमेवास्ति । चेत्तद्वासनायोगेन कृतं तेन प्रेयस उपलब्धिर्न तथा श्रेयः परित्यज्य प्रेयोवलम्बनेन किंचित्प्रयोजनं श्रूयते । तस्मात्तयोः सांसारिकैः श्रेय एवाऽऽदावाचरणीयम् ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विवि

नक्ति धीरः। श्रेयो हि धीरोऽभि प्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥

एतदुक्तं श्रेयः प्रेयश्च मनुष्यं सांसारिकं सिनीतः। अतो धीरो धत्ते चित्तं विवेकयोगेन धीरस्तौ श्रेयःप्रेयौ बन्धौ संपरीत्य संपरीक्ष्य विविनक्ति पृथग्विभाजयति कथं कर्म तद्विविधमेकं नियतं नित्यं नैमित्तिकं चान्यत्काम्यम्। तत्र काम्यं स्वर्गसंसारप्रदत्वेन बन्धस्याऽऽपादकमेवातस्त्याज्यं श्रूयते च तथा 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इति। नियतेऽपि या फलश्रुतिः श्रूयते सा प्ररोचनार्थैव। अतः सा फलवासना त्याज्यैव मोक्षप्रतिबन्धकत्वात्। न कर्मात एवोच्यते 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति। स्त्रीपुत्रवित्तादिरूपं प्रेयस्तु सांसारिकमेवास्ति। एवं विविच्य धीरः प्रेयसः प्रेयः परित्यज्य श्रेयो हि श्रेय एव मोक्षोपयुक्तं कर्माभिवृणीते। मन्दोऽल्पबुद्धिर्विषयासक्तो योगक्षेमाद्योगक्षेममपेक्ष्य प्रेयो वृणीते स तेन सितो भवति ॥ २ ॥

अथ त्वं कथम्—

स त्वं प्रियाप्रियरूपांश्च कामानभिध्यायन्नचि-
केतोऽत्यस्राक्षीः। नैतां सृङ्कां वित्तमयीम-
वाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

हे नचिकेतः स एवं श्रेयः प्रेयसो विविक्तवांस्त्वं प्रियाप्रियरूपान्मन्दस्य प्रियरूपान्धीरस्यापि प्रियरूपान्कामान्काम्यन्त इति कामा विषयास्तानभिध्यायन्नभिचिन्तयन्नत्यस्राक्षीरतिसृष्टवानतिमुक्तवान्। तदेवाऽऽह नैतां पुरोवर्तमानां सृङ्कां सिद्धिरूपां वित्तमयीमनेकवित्तप्रचुराम-वाप्तो वृतवांस्त्वम्। यस्यां सृङ्कायां सुकृतातिशयलब्धायां बहवो मनुष्या मज्जन्ति निमग्ना भवन्ति। त्वं तु प्राप्तायामपि निरपेक्षः ॥ ४ ॥

दूरमेते विपरीते विषूची विद्यया चाविद्येति
ज्ञाता। विद्याभीप्सिनं नाचिकेतसं मन्ये
न त्वा कामा बहवो लोलुपन्तः ॥ ४ ॥

एते श्रेयःप्रेयसी अनुकूलत्वेनाऽऽभासमाने अपि विपरीते प्रतिकूले एव

स्तः कथं प्रियं तद्भोगावसरेऽनेकविधसुखजनकं तथाऽपि न तथा मन्तव्यं दुःखरूपमेव सर्वदुःखमूलक्लेशसाध्यत्वात् । तथा पालनेऽपि महद्दुःखमेवास्ति राजचोरभयशङ्कायोगेन । तद्विनश्वरं च विनष्टे महद्दुःखं यावदायुः । तथा श्रेयोऽप्याचरणे महद्दुःखमेवास्ति । कामनायोगेन स्वर्गप्राप्तिकरं साऽनित्या । उक्तं च ‘ क्षीणे पुण्ये मृत्युलोकं विशन्ति ’ इति । तेन तद्वियोगे दुःखमेवातितराम् । संसारप्राप्त्या वर्तमानकालेऽपि तत्क्षयभीतिशङ्का । तस्मात्ते दुःखमूलत्वेन विपरीते एव । पुनः किंविधे दूरं विषूची विष्वञ्चतो विषूची । नानैव देहनऽऽत्मनोऽनयोः सङ्गो दूरं बहुकालमन्येष्वपि देहेषु बन्धनभूते एव स्तः । त्वं(?)। विद्यया विवेकेनाविद्याविद्यारूपे आत्मनो बन्धके इति ज्ञाताज्ञाते(?) । अतस्त्वां नचिकेतसमविद्यापरित्यागेन विद्याभीप्सिनं विद्यां परविद्यामभीप्सस्यभ्याप्तुमिच्छसि विद्याभीप्सिनं मन्ये । न त्वा त्वां बहवः कामा लोलुपन्तो लोलुपन्ति भृशं विमोहयन्ति । अतस्ताननपेक्ष्य विद्यामभीप्ससि ॥ ४ ॥

त्वदन्ये तु—

> अविद्यायामन्तरे वेष्टयमानाः स्वयमधीराः
> पण्डितंमन्यमानाः । दन्द्ह्यमानाः परियन्ति
> मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥

अविद्यायां न विद्याऽविद्याऽज्ञानप्रधाना जीवप्रकृतिस्तस्यां वर्तमानाः किमाधेयाधिष्ठानभावेन । अन्तरे मध्ये तयाऽऽवृताः । न केवलं तदेवैकमावरणम् । वेष्टयमानास्तद्गुणैस्तत्कार्यैश्च देहैस्तत्संभवेन च कर्मत्रयेण वेष्टिता आवृताः । नन्वविद्यावरणं कस्य पूर्णस्य वा चैतन्यस्य प्रतीचो वा वाच्यम् । न पूर्णस्यानन्तत्वात् । न परिच्छिन्नतयाऽनन्तं तदावर्तयितुं शक्यम् । चेत्प्रतीच एव । न तस्य तत्कृतत्वात् । सत्यमधिष्ठानयोगे शुद्धचित्प्रकृतौ य आत्मभावः स प्रत्यगात्मा तस्मात्स कथं न तयाऽऽवृतः । तेन स्वयमधीरा अविवेकिनोऽप्यात्मानं पण्डितंमन्यमानाः । केवलेन शास्त्रीयेणैव ज्ञानेनाऽऽत्मनि कृतकृत्यत्वं मन्यमानाः । तथा परिदह्यमानास्त्रिविधतापयोगेन पुनः पुनर्भृशं पीड्यमानाः । परियन्ति परितो गच्छन्ति । काम्यकर्मयोगेणेहामुत्र चाकर्मविकर्मयोगेण नानायोनिषु

भ्रमन्ति कथम्, यथाऽन्धेनैव नीयमाना गन्तव्यं प्राप्यमाणा अन्धाः परियन्ति तेन वृथा भ्रमणेनाऽऽत्मविनाशमेवापियन्ति। तथा स्वयमविवेकिनो यज्ज्ञानेन कृतकृत्यत्वं मन्यमानास्तज्ज्ञानमप्यन्यथाज्ञानमेवाब्रह्मविद्भिः कृतत्वादतो न तेषां संसारभ्रमणनिवृत्तिः ॥ ५ ॥

किमेषां बुद्धिस्तेषां तदाह—

न सांपरायः परियन्ति बालं प्रमाद्यन्तं वित्त-
मोहेन मूढम्। अयं लोको नास्ति परेति
मोचि पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

बालं बालबुद्धित्वादत एव प्रमाद्यन्तं प्रमाद्यति प्रमादमसावधानतां प्राप्नोति प्रमाद्यंस्तं वित्तमोहेन वित्ते यो मोहस्तेन मूढं प्रति न सांपरायो भाति। इदं शरीरं प्रारब्धकर्मभोगार्थमवलम्बितं तेन तत्प्रवाहे पतितमस्थाय्यग्रे मृत्युरागत इति न विजानाति तद्भयं त्यक्त्वाऽहंममत्वयोगेन न(?)परिग्रहेऽत्यासक्तो नानाविषयभोगे रतः काम्यनिषिद्धकर्माचरणशीलः। यद्वा मृत्युभयं मद्भयं चान्यायाचरणशीलस्याहं दण्डकोऽस्मीति न भाति। तेन यथेच्छाचरणशीलः। विवेकिनं प्रति भात्येवातः स तथा ज्ञात्वा न सज्जते। तस्य मूढस्य प्रेत्य गतस्य पुनरयं मानुषो लोको नास्ति तत्प्रापककर्माभावाद्धीनतर एवास्ति यथाकर्म। उक्तं चान्यत्र 'हीनतरं वा विशन्ति' इति। यस्मादयं लोको नास्ति तस्मात्परः परो लोकोऽस्तीति मोचि मा वाचि न वक्तव्यम्। स पुनः पुनः प्रतिमरणान्ते मे मम वशमापद्यते प्राप्नोति। तदसत्कर्मफलभोगाय। त्वं त्वविद्याया बाह्यस्तद्विज्ञानाधिकार्यतस्तं प्रार्थितं वरं तृतीयं ब्रवीमीति मन्दनिन्दा ॥ ६ ॥

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीत्येक इत्यत्र स आत्मा किंविधोऽस्ति तच्छृणिवत्याह—

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि
बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य
लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥

यः पूर्वोक्त आत्माऽयमस्तीत्येके नायमस्तीति चैक आहुः स बहुभि-

र्नानाविधैस्तदुपपादकैर्वेदशास्त्रार्थरूपैस्तदुपपादकानेकाचार्यादितैर्वचनैः श्रवणायापि श्रोतुमपि न लभ्यो लब्धुं शक्यः । यथा कस्यचन पदार्थस्य श्रवणेन परोक्षत्वेन ज्ञानं संभवत्युपपादनाय च न तथाऽनुपमेयस्यास्य साकल्येन परिज्ञानं संभवति । कथम्, अयमात्मा निरुपाधिर्निर्गुणः शुद्धोऽसङ्गो निर्विकारः परिपूर्णश्चिदानन्दमय इत्युपपाद्यते । तत्र यन्नि· रुपाधिरित्युक्तं तदुपाधेरत्यन्ताभावेन । चेत्तथा तदात्यन्ताभावरूपस्य न नामरूपगुणकर्मधर्मसंभवः स त्ववगम्यते तस्मान्न स तथा वक्तुमर्हः । तस्मिन्वर्तमानेऽपि स निरुपाधिरिति चेत्तदात्मनोऽनन्तत्वात्कुत्रावस्थानं तस्योच्येत । स तत्रैव वर्तमानोऽप्यनिर्वचनीयत्वेन विवर्तरूपो न विव- र्तस्याधिष्ठानदृष्ट्या भानमतो निरुपाधिरिति चेन्न विवर्तस्यात्यन्ता- भावो वक्तुं शक्यः स्वसिद्धान्तविरुद्धत्वात्तेन तद्दृष्ट्या भासमानोऽपि स तत्रैवास्ति तदधिष्ठानत्वात् । तस्य शुद्धं रूपं निर्विकल्पं प्रज्ञानं तत्स्वगतं तेन परं ब्रह्म नित्यं चिदानन्दमयम् । उत्पत्तिकाले तथा- विधस्य स्वगतस्य तस्यावलम्बोऽपि भवति । अत एवोच्यते ‘ तपसा चीयते ब्रह्म ’ इति । किं तत्तप इति चेत्तत्रैवाग्र उच्यते ‘ तस्य ज्ञानमयं तपः ’ इति । तस्मात्कथं तच्छास्त्रनिर्दिष्टनिरुपाधिकत्वं विज्ञेयम् । नास्तीति वक्तुमनुपपन्नं तथा निर्गुणत्वमपि दुर्बोधमेव । कथं यद्गुणानां लयोद्भवमूलं प्रज्ञानं तत्स्वगतं तेन परं ब्रह्म चिन्मयमतस्तद्रूपमेव तत् । अत एवोच्यते ‘ प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म ’ इति । यथा प्रभा रत्नस्यैव तदपृथग्रूपाऽतस्तया तदे- वास्ति तदा तस्यां वर्तमाना कथं न रत्नस्य तस्मात्तैस्तदेवाऽऽख्यायते न केवला प्रभा तथाऽत्रापि चित्संभवा गुणा ब्रह्मसंभवा एव तेन न स सगुण एवेति ज्ञायते तत्र कथं तस्य निर्गुणत्वं ज्ञेयम् । अथ स शुद्ध इत्युच्यते तत्र किं मलं तदभावेन शुद्धत्वमुपपादनीयं तस्य मायाऽवि· द्योपाधिस्तद्गुणा एवेति चेत्तदा तस्य सर्वस्यापृथक्सिद्धत्वात्कथं तच्छु- द्धत्वं विज्ञेयम् । तथाऽसङ्गत्वमपि नित्यं प्रकृतिगुणयुक्तस्य तत्कृतदेहाव- स्थायोगस्तेन प्रपञ्चस्याप्यत एव तन्निरासोऽपेक्ष्यते तदर्था च सद्गुरु· प्राप्तिस्तस्मात्कथं तत्तथा । एवं निर्विकारत्वमपि तस्यासुबोधम् । चेत्स तथैव तदा प्रज्ञानावलम्बनेन तच्छुद्धसत्त्वगुणप्रधानत्वेन शबलं किं जातं तथा गुणनिमित्तेनाव्यक्तादिसर्वसृष्ट्याकारेण किं विकृतं ज्ञेयम् । उपाधिरेव न विकारस्य सदसद्रूपत्वान्न केवलः स एव विकृतो मन्तव्यः

स्तेन सह स एव विकृतो दृश्यते श्रूयते च ‘ अयमात्मा ब्रह्म ’ इति तस्मात्कथं स निर्विकारः । एवं परिपूर्णत्वमपि श्रवणाय न लभ्यते । यत्पूर्णं तस्य न निराकारत्वं संभवति तदभावे सर्वगते तस्मिन्सर्वस्या-स्यावकाशः कुतः पूर्णं तद्विषयरूपं सलिलवत्तेन करणगोचरः स्यात् । तस्मादपूर्णं निराकारमेव चेत्तर्हि पूर्णत्वेनोच्यते ‘ पूर्णमदः पूर्णमिदम् ’ इत्यतो न तथा तद्विज्ञातुं शक्यम् । अथ चिदानन्दमयश्चेत्तदा ज्ञातृ-ज्ञानज्ञेयभोक्तृभोगभोग्यप्रसङ्गो भवेत् । तदा कथमनन्तो निर्विकल्पः सः । तदभावे कथमानन्दानुभवः । कथं चाऽऽश्रयेण विना ज्ञानम् । तेन तस्य तदपि दुर्बोधमेव । एवमनुपमेयत्वेन वागगोचरत्वाच्छ्रवणायापि न लभ्यः । अत एव शृण्वन्तोऽपि बहवो यमात्मानं न विद्युर्न विजानी-युस्तच्छ्रवणस्य दुर्बोधत्वात् । तर्हि किं तदुपपादनश्रवणाभाव एवेति चेत् । अस्याऽऽत्मनो वक्तोपपादक आश्चर्य आश्चर्यरूप एव । कथम्, अयं निरु-पाधिको निर्गुणोऽसङ्गो निर्विकारः परिपूर्णश्चिदानन्दमयोऽपि सोपाधिकः सगुणो देहावस्थावान्सविकार एवं सर्वाकारोऽपि निराकारो निराकार-सर्वाकारः परिपूर्णोऽपि गगनवदसङ्गो निराकारश्चिन्मयोऽपि ज्ञातृत्वादि-भावशून्यो नित्यानन्दमयोऽपि भोक्तृत्वादिभावरहित इत्याश्चर्योपपादन-योगेन वक्ता चाश्चर्योऽप्याश्चर्यरूप एव । तथा योऽस्याऽऽत्मन उपपाद-नस्य लब्धा स कुशलोऽतिचतुरः । यः प्रज्ञाधारणावान्स एवाधिकारी न मन्दप्रज्ञः । अस्याऽऽत्मनो ज्ञानात्मन्यात्मत्वेनापरोक्षतया विज्ञाताऽप्या-श्चर्यस्तथाऽन्तःक्रियायोगेण । किंविधः सः । कुशलेनापरविद्यापारावारे-णापि परविद्योपदेशेऽतिनिपुणेन सर्वज्ञेनाऽऽचार्येणानुशिष्टः कृतानु-शासनः ॥ ७ ॥

यस्मादेवं तस्मात्—

न नरेणावर प्रोक्त एष सुविज्ञेयो बहुधा<br>
चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र<br>
नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥

एष प्रकृत आत्मा नरेण मनुष्येणावरावरेण निकृष्टेनानधिकारिणा सांसारिकेणानिवृत्ताविद्यावरणेन बहिर्मुखेण शास्त्रतः परोक्षेणैवाऽऽत्म-नाऽऽत्मविचारपरिज्ञानिना प्रोक्तः प्रकर्षेणातिशयेन नानायुक्तिविवादेन

बहुप्रकारेणोक्तः शिष्येणापि बहुधा बहुविधेन नित्यं रहसि विचिन्त्यमानस्तच्छ्रवणानुरूपमननिदिध्यासयोगेनापि न सुविज्ञेयः शोभनप्रकारेणापरोक्षत्वेन विज्ञातुं शक्यः । तस्यापरोक्षत्वेन विज्ञानं चतुर्विधाविद्यानिरासेनैव सा गुरोरेवानिरस्ता तदा कुतः शिष्यस्य तन्निरासस्तदभावे कुतोऽक्षरज्ञानमतस्तेषां स उपदेशव्यवहारो व्यर्थ एव । अनन्यप्रोक्ते नान्यैः प्रोक्तेऽविद्यानिरासे नापरोक्षतयाऽऽत्मन्यात्मत्वेन तत्त्वविदं सर्वज्ञं श्रीसद्गुरुं विना ज्ञातुमशक्येऽत्राऽऽत्मनि संसारिणां गतिर्याथार्थ्येनोपदेष्टुं प्रवक्तुमपि च नास्ति । किम्, एषोऽणीयान्ह्यतिसूक्ष्मः । 'न चक्षुषा गृह्यते यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह गुणकार्यत्वात् । तथा यो बुद्धेः परोऽतस्तयाऽप्यग्राह्यो रजःप्रधानत्वात् । यं प्रज्ञानं न वेद ज्ञातृभावेनातोऽणीयान्हि । अणीयस्त्वेन भौतिकाणुकल्पः स्यादत उच्यते । यदणु भौतिकं तत्प्रमाणाद्यद्यपि प्रत्यक्षं न भवति तथाऽप्यन्यैः प्रमाणैस्तर्क्यं तर्कयितुमर्हं तेन मनःप्रभृतिभिर्ग्राह्यं नायं तथा प्रमाणगम्यः कर्तृकरणप्रज्ञानागम्यत्वात् । स्वप्रकाशस्य चिन्मयस्याऽऽत्मनो ज्ञानं स्वसंवेद्यत्वेन स्वप्रकाशत्वेन चैवास्ति ॥ ८ ॥

नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव
सुज्ञानाय प्रेष्ठ । यां त्वमापस्सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥९॥

हे प्रेष्ठ प्रियतम । नचिकेतोऽन्येनैव पूर्वोक्तादवरनरात्केनचित्सुज्ञेन कारुणिकेन सदाचार्येण दैवाल्लब्धेन सुज्ञानाय शोभनप्रकारेणापरोक्षतया ज्ञातुं प्रोक्ता मतिर्विवेकस्तेन शिष्येण तर्केण मोक्षानुपयुक्तभेदपरशास्त्रश्रवणजनितेन कुवादेन नाऽऽपनेया न तिरस्करणीया । यतोऽनेकजन्मकृतनिष्कामसत्कर्माराधितपरमेश्वरप्रसादलभ्या सा । श्रद्धया संग्रहीतव्यैव नोपेक्षणीया । दुःखसागरसंसारोद्धरणहेतुत्वात् । तां मतिं त्वमापस्सत्यस्यापत्स्यसे प्राप्स्यासि मत्प्रसादात् । कुत इत्यत्र बतेति सन्तोषेणाऽऽमन्त्र्याऽऽह—यतस्त्वमतिधृतिरत्यन्ता धृतिर्धैर्यं यस्य स तथाऽसि मया बहुधा परीक्षितो न चालितोऽसि तस्मादाप्स्यसि हे नचिकेतस्त्वादृक्त्वत्सदृशः प्रष्टा प्रश्नस्य कर्ता नो भूयान्न बहुतरस्त्वमेको दृष्टः ॥ ९ ॥

ततस्तवनायेदमुच्यते—

जानाम्यहं शेवधीरित्यनित्यं न ह्यध्रुवैः प्राप्यते
हि ध्रुवं तत्। ततो मया नचिकेतश्चितोऽ-
ग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्॥ १०॥

शेवधीः शेवधिर्निधिरनित्यं वस्त्वित्यहं जानामि द्रव्यादिपदार्था अनित्या इति किं तत्कारणं निधिरनित्य एव सर्वस्यापि कालप्रवाहे पतितत्वात्। नहि नैवाध्रुवैरनित्यैः संगृहीतैस्तद्ध्रुवं वस्तु परमार्थसंज्ञं प्राप्यते। ननु ध्रुवं तदेकमेव तद्परं सर्वमध्रुवमेवास्ति तदा तत्प्राप्तिः केन ध्रुवेणैव कथं च। ध्रुवं तदक्षरं ब्रह्म तदेव मायोपाधित्वादीश्वरस्वरूपं कर्मोपासनादिभिराराधितः स परमात्मा गुरुरूपेण शिष्यं प्रति प्रकटो भवति तत्प्रसादाद्ध्रुवसंप्राप्तिः। ननु यद्गुरुरूपं तन्मर्त्यमेव कथं तेनाध्रुवेण ध्रुवसंप्राप्तिः। गुरोर्मुख्यं रूपमुपदेशपरं तत्किं स्थूलं वा सूक्ष्मं जीवरूपं न स्थूलं जडत्वान्न च जीवरूपमपि विनाऽपरोक्षात्मतत्त्वविज्ञानं कुतस्तस्य गुरुत्वमतो योऽपरोक्षत्वेन परब्रह्मात्मविज्ञानेन नित्यं स्वरूपनिष्ठावान्स एव गुरुत्वार्हः। स निजानन्दमयतां निर्विकल्पतां परित्यज्य शिष्यबोधाय चित्प्रकृतिमाश्रित्य स्वाविस्मरणेनैव तत्परं तत्त्वं शिष्यं बोधयते तत्प्रसादात्तदुपलब्धिश्चास्य भवति तदा यत्सच्चिदानन्दरूपं परं ब्रह्म ध्रुवं तदेव गुरुरूपं विजानीयात्। तेन स्वगतप्रज्ञाप्रकाशेन तत्स्थूलमपि व्याप्तं दृश्यते परापरविद्याप्रकाशनेनातत्सङ्गेन तदपि चिन्मयमेवास्ति। तदा सर्वदा स्वानन्दसंतृप्तत्वात्तदानन्देन व्याप्तोऽयं तस्य देहः परब्रह्मानन्दमयः। तेन परब्रह्मरूपेणान्वितत्वात्तद्रूपदर्शनेन च ब्रह्मरूपोऽप्यतस्तेनाक्षरसंप्राप्तिर्भवति नान्येन। ननु कर्मोपासनादिनाऽऽराधितः स ज्ञानं ददाति तदा तदपि साधनरूपमेव ध्रुवोपलब्धये सत्यं, न साक्षाद्ध्रुवसंप्रापकं परम्परयाऽस्त्येव। यस्मादेवं नानित्येन नित्यसंप्राप्तिः। ततस्तस्मान्मया हे नचिकेतोऽनित्यैर्द्रव्यैरनित्यद्रव्यव्ययेनाग्निः सोपाधिकः परमात्मा चितः। आराधनेन चितः संगृहीतस्ततस्तत्प्रसादान्नित्यं वस्तु परमार्थसंज्ञं प्राप्तवानस्मि॥ १०॥

तथा त्वमपीत्याह—

कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरनन्त-

मभयस्य पारम् । स्तोमं महदुरुगायप्रतिष्ठां
न त्वं धृत्या धीरो नचिकेतोऽत्यस्राक्षीः॥ ११ ॥

कामस्याऽऽप्तिं काम्यते कामस्तस्याऽऽप्तिं काम आप्यते प्राप्यतेऽनयाऽऽप्तिस्तामाप्तिं कामाप्तिरूपं यत्प्राप्त्या सर्वेऽपि कामा आप्यन्ते स्वभावात् । अत एवोच्यते 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति । कथं ब्रह्मणा सर्वकामाप्तिरिति चेत्तत्रोच्यते 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति अंशिनः प्राप्त्यांऽशप्राप्तिः स्वभावाज्जातैव । तस्मादुक्तं सर्वकामाप्तिरूपमिति । जगतः स्थूलसूक्ष्मरूपस्य प्रतिष्ठामधिष्ठानभूतं स्थित्युद्भवलयकारणत्वात् । नोत्पत्तिकाले कारणात्कार्यं पृथगेवोत्पद्यते तस्य सहचरत्वाद्घटेषु मृदिव । अत उक्तं 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' । स्थितिकालेऽपि कार्यजातस्य सर्वस्य कारण एव स्थितिर्दृश्यते तन्तुविनाशे कुतः पटस्यावस्थानम् । लयोऽपि कारणानुक्रमेण सर्वसाम्यान्तर्गतं भूत्वा पर एवावतिष्ठते। तेन जगतः प्रतिष्ठाभूतम् । क्रतोस्तस्यापि प्रतिष्ठाभूतं तथा स्मर्यते च 'तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्' । केन रूपेणेति चेत् 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना' इति । अनन्तं सर्वगतम् 'तद्दूरे तद्वन्तिके तदन्तरस्य सर्वस्य' इत्युक्तत्वात् । अभयस्य पारं भयाभावोऽभयं तस्य पारमन्तः । अभयं तद्भयसापेक्षितं द्वितीयाद्वै भयं भवति । यत्र द्वैतमेव वस्तुतो नास्ति तत्र कुतो भयाभये । स्तोमं वेदादिभिः स्तूयते तत्स्तोमम् । 'एष भूतपतिरेष भूतपालः स सेतुर्विधरण एषां लोकानामसंभेदाय सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । 'महन् महतोऽपि महीयांसम्' अत आम्नातं 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तस्मादेवोरुगायम् । उरुभिर्महद्भिर्गीयते तत् । 'अथात आदेशो नेति नेतीत्यात्माऽगृह्यो न हि गृह्यते, अस्थूलमनणु' इत्यादिभिः । प्रतिष्ठां प्रतिष्ठाभूतं यत्सत्तया सर्वस्यापि निजनामरूपगुणधर्मकर्मयोगेणास्तित्वं सैव प्रतिष्ठा सर्वस्य । विना तत्सत्तयाऽकिंचनभूतमेव सर्वम् । यद्वा सर्वस्य प्रतिष्ठाभूतम् । कथं यद्विज्ञानमेव सर्वविद्याप्रतिष्ठानत्वेन स्तूयते 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति । तथा तद्विद्यावानपि 'नैनं पाप्मा तरति सर्वं

पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति' इत्यादिना। हे नचिकेतो धीरस्त्वं धृत्या मयोपदिष्टवाक्यधारणयाऽऽत्मन्यात्मत्वेनापरोक्षतयाऽनुभूय नात्यन्ताक्षीर्नातिसृष्टवानहमिव नातिमुक्तवान्सर्वदा तदनुसंधानशील एव भविष्यसीति भावः॥ ११॥

तद्विज्ञानेन किं स्यात्तदाह—

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥ १२॥

तमात्मानं दुर्दर्शं द्रष्टुमशक्यं, किंनिमित्तमिति चेत, गूढं गुप्तं सर्वान्तरत्वेन वर्तमानत्वात्। तदेवोच्यते 'यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुषोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' इति। यद्दृष्टिपथे तिष्ठति तच्चक्षुषा ग्राह्यं स्यात्। यश्चक्षुषि तिष्ठंचक्षुषोऽन्तरः स कथं चक्षुषा वेद्यो भवेत्। चक्षुरादीनीन्द्रियाणि तु(?) 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इत्युक्तत्वात्कथं तैर्ग्राह्यः स्यात्। तथाऽन्तर्वर्तिना मनसाऽप्यगृह्यः। उक्तं च 'यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनसोऽन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति। एवं यन्मनसोऽप्यन्तरं तत्सत्तारूपं तत्तेन कथं ज्ञेयं स्यात्। तदन्तरङ्गा बुद्धिस्तयाऽप्यग्राह्यः। तदन्तरङ्गत्वात्। स्मृतं च 'यो बुद्धेः परतस्तु सः' यत्सर्वातीतं साक्षिरूपं प्रज्ञानं तस्याप्यन्तरत्वेनोच्यते 'यः प्रज्ञाने तिष्ठन्प्रज्ञानादन्तरो यं प्रज्ञानं न वेद यस्य प्रज्ञानं शरीरं यः प्रज्ञानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति। एवं तेनाप्यग्राह्यः। अथ प्रज्ञात्राऽप्यग्राह्यः। तथा श्रुतिः 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मनोऽन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति। यज्ज्ञातृज्ञानवेद्यं तद्विलक्षणमेवातो न तदात्मा भवेत् 'अविज्ञातो विज्ञाता' इत्याम्नातत्वात्। आत्मविज्ञाने ज्ञानेऽवलम्बितेऽनवस्थाप्रसक्तिरेव। इत्येवं सर्वान्तरङ्गत्वेन गूढो य आत्मा स चक्षुरादिभिर्दुर्दर्श एव। इति चक्षुराद्यन्तरत्वेनावस्थातुं किं निमित्तम्। अनुप्रविष्टं तदेवाऽऽह श्रुतिः 'स एष इह प्रविष्ट आनखाग्रेभ्यो

यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलायः ' इति । अथ कथं तस्यानुप्रवेशः। यच्छुद्धं परं ब्रह्म तदेवाऽऽत्मगतचित्प्रकृत्यवलम्बनेनेश्वरत्वं प्राप्य स्वनिर्मितस्याण्डस्यान्तः ' पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ' इति अंशत्वेन जीवरूपेणानेकधा संभूय तत्पुरप्रवेशं कृतवानत उक्तमनुप्रविष्टमिति । तस्माज्जीवरूपं तत्सोपाधिकस्य परमात्मनोंऽशभूतत्वात्सोपाधिकमेव । तत्रोपाधौ यानि यानि गुणनिमित्तत्वेन संभूतानि तत्त्वानि तत्र तत्र सत्तारूपेणान्तस्तदेव वर्तमानम् । जीवरूपेण संभवनेऽनुप्रवेश एव निमित्तम् । पुरेऽनुप्रविष्टस्य तस्य किं मुख्यं स्थानमिति चेत् । गुहाहितम् 'अधो निष्ठ्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ' इत्यादिभिर्वाक्यैर्या हृत्पुण्डरीकरूपा गुहा तस्यामाहितं स्थितं सत् । अतस्तत्परवेश्मभूतत्वेनाप्युच्यते—' दहरं विपापं परवेश्मभूतम् ' इति । तत्रापि कथं तदवस्थितत्वमिति चेत् । गह्वरेष्ठम् । अतिशयितं गह्वरं गूढं गह्वरेष्ठम् । कथं तत्रापि ' दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ' इत्युक्तत्वान्न केवलं हृत्पुण्डरीक एव वर्तमानम् । तस्यान्तर्यद्दहरं गगनं तदन्तर्वर्तित्वेनाऽऽच्छन्नम् । अतस्तदन्तर्दृष्ट्याऽवेक्ष्यमाणे तद्गगनमेव भाति न तत् । जीवरूपेणानुप्रविष्टत्वाज्जातत्वं स्यादत उच्यते—पुराणं चिरन्तनम् । दुर्दर्शोक्तत्वादनुभवाभावः स्यादत आम्नातम् ' अध्यात्मयोगाधिगमेन । आत्मन्यधिकृतो योगोऽध्यात्मयोगस्तेन योऽधिगमो ज्ञानं तेनाध्यात्मयोगाधिगमेन । देवं द्योतमानं स्वप्रकाशं सच्चिदानन्दरूपं तमात्मानं मत्वाऽऽत्मन्यात्मत्वेनापरोक्षत्वेनानुभूय धीर उक्तविवेकवान्हर्षशोकौ जहाति त्यजति । प्रियं प्राप्य न हर्षमेति नाप्यप्रियं प्राप्योद्विजते च । समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनो भवति । स्वरूपातिरिक्तस्य सर्वस्य विवर्तरूपत्वदर्शनात् । अथ कथमध्यात्मयोगाधिगमः । योगस्त्रिविधः कर्मोपासनाज्ञानभेदेन । तत्र कर्मोपासनायोगयोरात्मेतरदेवताराधनपरत्वेन नाध्यात्मयोगत्वम् । तौ पूर्वपक्षभूतावेव । तृतीयो ज्ञानयोगः ' राजविद्या राजगुह्यं पवित्रम् ' इत्यादिना वर्णितः स एव । कथमिति चेत् । रहसि सदाचार्यप्रसादलभ्यपराविद्याप्रकाशेनानात्मभूतबाह्यविषयान्परित्यज्य तत्र सक्तमात्मप्रज्ञानं ततः प्रत्यावर्त्याऽऽत्मनिष्ठं कुर्यात् । तदात्मानात्मविवेकतोऽनात्मभूतमिदं स्थूलमात्मत्वेन प्रतीयमानमपि दृश्यत्वाज्जडत्वात्कर्मजत्वादनात्मभूत-

मिति निश्चित्य यो द्रष्टा श्रोता मन्ता प्रज्ञानवानन्तराकाशस्थः स एवाऽऽत्मेति विदित्वा तद्देहनिष्ठं प्रज्ञानं ततः कूर्मोऽङ्गानीव समावर्त्य शरीरासङ्गत्वेन हृत्पुण्डरीकावकाशनिष्ठं विदधीत। तत्र स्थिरे मनसि सति स्थूलाभावः स्वभावात्। तथा जागृतेस्तज्जन्यमानस्यापि। तत्र यद्दहरं वियदन्तस्तदेवानन्तत्वेनाऽऽभाति तच्चिदाकाशाभिधं तत्र दृश्यदर्शनद्रष्टृत्वयोगाल्लिङ्गदेहे स्थितिः। तदपि विवेकतोऽनात्मा, विलक्षणतत्त्वभेदसाक्षित्वात्। एवं विलक्षणत्वेन यज्ज्ञेयं तदनात्मभूतं तदा यः प्रज्ञानाश्रयभूतः स आत्मा। इति ज्ञात्वा दृश्यदर्शनद्रष्टृत्वपरित्यागेन वृत्तिमात्रविलयेनाऽऽत्मन्यवस्थानं लयप्राधान्येन संभवति। तदात्मत्वेन प्रतीयमानस्य तस्याप्यभावः। स पञ्चविंशतितत्त्वरूपस्तल्लयोद्भवे वर्तमानस्याऽऽत्मनो मुख्यं स्वरूपं कथं स्यात्। एवं तन्निरासेनाऽऽत्मनस्तमःप्राधान्यात्कारणदेहेऽवस्थानं जातम्। तत्रापि तत्प्रकाशकत्वेन ज्ञानं वर्तत एव विना तेन कुतः सोऽनुभवो नाहमात्मानं वेदेति। तस्मात्तदन्तर्वर्तिज्ञानावलम्बनेन तज्जडत्वनिरासः। तेन प्रज्ञानमयत्वमात्मनः। सैव कारणदेहनिरासेन प्रज्ञानमये महाकारणे निष्ठा तत्रापि ज्ञानमात्मा चित्तदाश्रयः। आत्मानात्मविवेकतो न ज्ञानस्य विनाऽऽश्रयेणावस्थानं तस्मात्स एव तत्प्रवर्तको निवर्तकः। अतो ज्ञानावलम्बपरित्यागेन ज्ञातृत्वमप्यनाश्रित्याज्ञानान्यथाज्ञानमुक्तत्वेन गुरुणा दत्तविज्ञानयुक्त्या निर्विकारत्वेनावस्थानमेव सच्चिदानन्दमयी स्वप्रकाशत्वेन निष्ठा संभवति। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं यस्य भासा सर्वमिदं विभाति' स एवाध्यात्माधियोगाधिगमो विज्ञेयः॥ १२॥

यथाऽऽत्मन्यध्यात्मयोग उपदिष्टस्तमेवान्वन्तर्विवेकेनापरोक्षतया शुद्धात्मतत्त्वमनुभवितव्यमित्याह—

एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणु-
मेतमाप्य। संमोदते मोदनीयꣳ हि लब्ध्वाऽ-
विवृतꣳ सद्म नचिकेतसं मन्ये॥ १३॥

मर्त्यो मनुष्योऽधिकारी विवेकवानास्थापर एतन्मयोक्तमात्मविज्ञानसाधनं श्रुत्वा संपरिगृह्य तदनुमनननिदिध्यासायोगं गृहीत्वा विषयेषु संसक्तमात्मप्रज्ञानं तेभ्यः प्रवृह्योद्यम्य तदनुसंधानपरित्यागादन्तर्मुख-

त्वेन प्रत्यावर्त्य धर्म्यं धर्मादनपेतमणुं सूक्ष्मतरमेतमात्मानमाप्याऽऽप्त्वा संमोदनीयं हि संमोदितुमर्हमानन्दमयत्वाल्लब्ध्वा संमोदते संमोदेत संमोदं प्राप्नुयात् । इति सदाचार्यमुखाद्विवेकं लब्ध्वा जिज्ञासुः स नचिकेता उक्तविधेनाऽऽध्यात्मयोगेनाऽऽत्मन्यात्मत्वेनाऽऽत्मानमनुभूतवान् । तत्तस्य चिह्नं विज्ञाय स गुरुस्तमुवाच नचिकेतसं त्वामधुनाऽविवृतं न विवृतमावृतं तदविवृतमपरिच्छिन्नं व्यापकं पूर्णं सद्म स्थानं लब्धवन्तं मन्ये देहचतुष्टयाद्यविद्यावरणमुक्तः सन्परे परिपूर्णे चिदानन्दमये ब्रह्मणि तन्मयत्वेनावस्थित इति जानामि ॥ १३ ॥

इत्येवं मृत्युप्रसादादात्मानं साक्षात्कृत्य तदानन्दं चानुभूय देहमागत्य तमनुभवं प्रकाश्य पुनस्तथाविधे श्रवणे प्रीतिमान्स नचिकेता उवाच—

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृता-
कृतात् ॥ अन्यत्र भूताच्च भव्याच्च
यत्तत्पश्यन्ति तद्वद ॥ १४ ॥

धर्माद्वर्णाश्रमनियतादन्यत्र विलक्षणं यत्र तज्ज्ञानं नास्ति धर्माभावेऽधर्मस्तदकरणरूपः स्यात् । अन्यत्राधर्मात्सोऽपि यत्र नास्ति । तत्करणाकरणातीतं तथाऽन्यत्रास्मात्कृताकृतात् । अन्येषामपि गुणकरणदेहव्यापाराणां भावो वाऽभावोऽपि यत्र नास्ति निष्प्रपञ्चत्वात् । एवमपि कालान्तर्भावि स्यात् । अन्यत्र भूतात्पौर्वकालिकाद्भव्याच्चौत्तरकालिकाच्च । न यस्य पूर्वापरकालौ स्तस्तस्य तत्सापेक्षितवर्तमानकालः कुतः कालत्रयातीतत्वेनोत्पत्तिस्थितिप्रलयातीतम् । एवं यच्छुद्धं स्वरूपं तत्पश्यन्ति ज्ञानिनस्तद्वद मह्यम् । यतः श्रुतमपि मनो मे नालमेति ॥ १४ ॥

इति नचिकेतसो वचनमाकर्ण्य यथा व्यतिरेकवृत्त्या परब्रह्मात्मानुभवः कृतस्तथा तदनुभूतस्वरूपान्वयं बोधयितुमाह—

सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च
यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते
पदं संग्रहेण ब्रवीम्योम् ॥ १५ ॥

सर्वे ऋगादयो वेदा यत्पदं पद्यते गम्यते सर्वैरन्ते पदमामनन्त्यभ्यस्यन्ति । पुनः पुनर्वचनमभ्यासः । सर्वाणि चानशनादिभिस्तपान्ति

तपांसि सर्वे तपस्विनो यत्पदं प्राप्यत्वेन वदन्ति । यत्पदमिच्छन्तो ब्रह्मचर्यं ब्रह्म वेदाख्यं चर्यतेऽभ्यस्यतेऽत्र ब्रह्मचर्यं तच्चरन्ति । ब्रह्मचर्यमाहात्म्यं छान्दोग्ये विस्तरेणाभिहितमस्ति । तत्पदं ते तुभ्यं संग्रहेण संक्षेपेण ब्रवीमि । किंतत् । ओमिति ॥ १५ ॥

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

एतद्ध वा एतदेवाक्षरमोंकाराख्यं ब्रह्म वेदचतुष्टयरूपम् । एतद्ध्येवाक्षरं परं सर्वातीतं सर्वोत्कृष्टत्वात् । एतद्ध्येवाक्षरं न क्षरति तदक्षरमविनाशि वस्त्वात्मरूपम् । तस्मादेतद्ध्येवाक्षरं ज्ञात्वा यः पुमान्यदिच्छतीहामुत्र च तस्य तत्तेनानायासेनैव प्राप्तं भवति । कथमेतदक्षरं वेदचतुष्टयरूपं परं ब्रह्म च कथं चैतज्ज्ञातवत एव सर्वं भवतीति चेत् । प्रणवः स सार्धमात्रात्रयस्तत्राकार उकारो मकार इति तिस्रो मात्रा योऽन्ते ध्वनिः सार्धमात्रा । तत्र यो ध्वनिरन्त्यः स एव सर्ववेदाकारेण संभवति विना तेन कुतः शब्दोत्पत्तिस्तदभावे कुतो वेदोत्पत्तिः । मात्रात्रयं तु वेदत्रयसारभूतम् । उक्तं चग्ब्राह्मणे 'प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवं ताँल्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदोम्' इति । तस्मात्सर्वमन्त्रमयो व्यापकश्च सोऽतः सर्वमन्त्रारम्भे प्रथमं स उच्चार्यते । अथ कथं परं ब्रह्म । अकारेण परमात्मनः सकार्यं रजो वाच्यं किं तत् । विराट्परमात्मनः स्थूलं शरीरं तत्रावस्थोत्पत्तिरभिमानी ब्रह्मेत्येतद्रजःकार्यमकारवाच्यम् । तथा हिरण्यगर्भशरीरं सूक्ष्मं पञ्चविंशतिदेवतात्मकं तत्रावस्थास्थितिरुभयाभिमानी विष्णुरित्येतत्तमःपूर्वकसत्त्वस्य कार्यमुकारवाच्यं ज्ञेयम् । माया शरीरं प्रलयोऽवस्था रुद्रोऽभिमानीत्येतत्तमःकार्यं मकारवाच्यं महामाया शरीरं सर्वज्ञत्वमवस्था परमात्माभिमानीत्येतच्छुद्धस-

स्वस्य कार्यमर्धमात्रया वाच्यम् । इति प्रणवेन देहादियुक्तः परमात्मा वाच्यः। यः परमात्मा तदेव परं ब्रह्म तस्मात्तेन परमात्मनः सगुणं निर्गुणं च रूपे वाच्ये तेन वाच्यवाचकयोरभेदात्प्रणवस्तद्रूप एवास्ति। परमात्मा स्वभक्तजनकृपापारावारस्तदुद्धारं चिकीर्षुः स्वयं चित्प्रकृतिमाश्रित्य तया प्रज्ञानवान्सन्संकल्परूपो भूत्वा नादरूपेण व्यक्तिमापद्य प्रणवरूपेण संबभूवातस्तत्पूर्वरूपं ध्वनिर्ध्वनेः संकल्पस्तस्य प्रज्ञानं तत्परं ब्रह्मैवास्त्युक्तं च 'प्रज्ञानं ब्रह्म' इति । तस्मादोमित्येतदक्षरं परं ब्रह्म । ननु सर्वेऽपि वर्णाः संकल्पप्रज्ञानमूला एव तेन तेऽपि किं न तथा । न । ते कार्यप्रपञ्चप्रकाशकत्वेन प्रपञ्चनिष्ठास्तामसाहंकारसंभूतवियद्गुणरूपत्वात्तामसाः । प्रणवस्य तूत्पत्तिर्मायाविद्यातमोनिरासायोक्तप्रकारेण स्वाविस्मरणात्प्रज्ञानावलम्बनेनैव जाताऽतस्तद्रूप एव सः । वाच्यवाचकाभेदेनापि तद्रूप एव । तस्मादेतदक्षरज्ञानं तत्परब्रह्मात्मविज्ञानं तस्य परब्रह्मरूपत्वात् । कथं तदक्षरयोगेण ब्रह्मात्मानुभवः । यथा कारणे देहादि सर्वं सार्धमात्रात्रयेण वाच्यं तथाऽध्यात्ममपि विजानीयात्तदंशत्वात् । तत्र स्थूलं शरीरमात्मनस्तत्रावस्था जागर उभयाभिमानी विश्व इत्येतदाविद्यकरजोगुणकार्यं प्रणवपादाकारवाच्यं विजानीयात् । तथा लिङ्गं शरीरं पञ्चविंशतितत्त्वात्मकं तत्रावस्था स्वप्न उभयाभिमानी तैजस इत्येतत्त्रयमविद्यातमःपूर्वकसत्त्वकार्यमुकारवाच्यम् । कारणं शरीरं सुषुप्तिरवस्था प्राज्ञोऽभिमानीति त्रयं मकारवाच्यम् । महाकारणं देहस्तुरीयावस्था प्रत्यगात्माभिमानीत्येतच्छुद्धसत्त्वगुणस्य कार्यमर्धमात्रावाच्यम् । एवं सार्धमात्रात्रयप्रणवोच्चारकाले रहस्यवस्थाय विधिवदासनं प्रतिष्ठाप्य बाह्यविषयान्बहिस्त्यक्त्वा तन्निष्ठमात्मप्रज्ञानं ततः प्रत्यावर्त्य तावद्देहनिष्ठं कुर्यात् । ततोऽकारोच्चारणे तद्वाच्यस्थूलशरीरमनुचिन्त्योकारोच्चारणेन तत्साक्षित्वमनुभूय तेनाऽऽत्मनोऽन्तर्निष्ठत्वं विज्ञाय स्थूलानुसंधानपरित्यागेनान्तर्मुखो भूत्वा तत्त्वात्मकलिङ्गदेहरूपमात्मानमनुचिन्तयेत् । ततो मकारोच्चारणेन विलक्षणधर्मसाक्षित्वेन तदतीतं विज्ञाय सर्ववृत्तिपरित्यागेन कारणदेहनिष्ठो भवेत् । अन्तेऽर्धमात्रोच्चारणेन जडत्वसाक्षित्वेनाऽऽत्मानं प्रज्ञानयोगेन सर्वसाक्षिस्वरूपमनुचिन्तयेत् । ततस्तदन्तगतध्वनिविलयेन तत्साक्षित्ववृत्तिपरित्यागाज्ज्ञानाज्ञाननिरासेन निर्विकल्पत्वेन परे ब्रह्मणि तद्रूपत्वेनावतिष्ठेत । यद्वा पूर्वमेव देहावस्थात्रयसाक्षित्वेन निरवलम्बे निष्ठां

विधाय प्रणवोच्चारणं कृत्वा मात्रावसाने तत्साक्षित्वपरित्यागेन निर्विकल्पामात्मन्यात्मत्वेन स्थितिं विदधीत। अन्तर्मुखत्वाभावादेतत्कर्तुं न शक्यते चेत्तदा तदुच्चारणेन तद्वाच्यसगुणस्वरूपमनुचिन्तयेत् । यद्वा ज्योतिर्मयं तदेवाक्षरं विचिन्तयेत्। इति प्रणवेनाऽऽत्मन उपासनापरस्य च ब्रह्मणः सगुणस्य परमात्मनः सर्वस्यापि च तस्य सर्वरूपत्वात् । य एतद्ध्येवाक्षरं ज्ञात्वा तदुपासनायाः प्रचलितो योगभ्रष्टो वा ज्ञानार्थं सगुणब्रह्मोपासकश्च सोऽर्चिर्मार्गेण गतश्चेत्तस्य परलोकप्राप्तिराब्रह्मलोकं भवति । तत्र स यदिच्छति तस्य तद्भवति संकल्पादेव प्राप्तं भवति । तदेवोक्तं छान्दोग्ये ‘ स यदि पितृलोककामो भवति संकल्पादेव पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयतेऽथ यदि मातृलोककामो भवति संकल्पादेव मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयतेऽथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयतेऽथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयतेऽथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयतेऽथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयतेऽथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयतेऽथ यदि गीतवादितलोककामो भवति संकल्पादेवास्य गीतवादिते समुत्तिष्ठतस्तेन गीतवादितलोकेन संपन्नो महीयतेऽथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयतेऽथ यं यं कामो भवति यं यं कामं कामयते सोऽस्य संकल्पादेवास्य समुत्तिष्ठति तेन संपन्नो महीयते ’ इति पूर्णदृशाप्राप्तस्य तु ‘ न प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ’ ॥ १६ ॥

यस्मादेवं तस्मात्—

> एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् ।
> एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

एतदालम्बनमेतस्योंकारस्याऽऽलम्बनमुपास्यत्वेनावलम्बनं श्रेष्ठं सर्वावलम्बनेभ्यः सर्वरूपत्वात् । एतदालम्बनं परं साधनं ब्रह्मात्मज्ञानस्योक्तप्रकारेण व्यतिरेकवृत्त्या सर्वनिरासेन शेषस्याऽऽत्मस्वरूपस्य प्रापकत्वात्।

एतदालम्बनं ज्ञात्वैवं कर्तव्यमिति सदाचार्यमुखतो विज्ञाय तथाऽवलम्ब्य तान्निष्ठतया दशां संसाध्य ब्रह्मलोके परब्रह्मलोक इव सर्वाधिष्ठानत्वाद्ब्रह्मलोकस्तस्मिन्महीयते महांस्तद्रूपत्वेन भवति। साधकस्तु प्रारब्धकर्मक्षयान्मृतश्चेत्तार्हि ब्रह्मलोके ब्रह्मणो विरञ्चेर्लोके सत्याख्ये महीयते पूज्यो भवति ॥ १७ ॥

स ज्ञानी शुद्धस्वरूपेण कथमस्ति तदाह—

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥

न जायते जननं न प्राप्नोति। म्रियते वा तथा न मरणमपि। ननु जन्ममरणे न केवलस्य देहस्य नाप्यात्मनः केवलस्य। जीवयोगेन देहस्य मातृगर्भे वर्तमानत्वम्। तेन जननमरणे संभवतः। यथा देहयोगेनाऽऽत्मनस्तत्संबन्धो बालत्वादिभावदर्शनात्। एवं सति कथं न जायते म्रियते वेत्युच्यते। सत्यम्! तज्जननमरणे न वस्तुत आत्मनः। औपाधिके स्तः। सोऽनिर्वचनीयत्वेन विवर्तरूपः। विवर्तस्त्वन्यथाभासमात्रोऽतात्त्विकः। तत्कृते जन्ममरणे अपि तथा। अतोऽधिष्ठानदृष्ट्या न तद्भानमपि तदद्वितीयं यथावदेव। तेन न जायते म्रियते वेत्युक्तम्। पुनः कथं स आत्मा विपश्चित्प्रज्ञानवानविपरिलुप्तचैतन्यः। नन्वेवं कथं स्याद्यच्छुद्धं परं ब्रह्म तदेव स्वगतचित्प्रकृतियोगेन सत्त्वगुणतः शबलमीश्वररूपं संभूय ततो गुणत्रययोगतोऽव्यक्तादिरूपेण सविकल्पप्रपञ्चनिष्ठं भवति। तदा कथं तन्नित्यज्ञानानन्दमयम्। यदुपाध्यवलम्बनेन सविकल्पत्वं तत्प्रत्यक्परमचैतन्ययोरेव न पूर्णे तत्सर्वदा निरुपाधिकमेव। तत्र कुत उपाध्यवलम्बस्त्यागश्च तत्कृतशबलत्वादिभावा अपि। तन्नित्यं चिदानन्दमयमेव तथाऽपि न तत्र सदवगमकत्वं चिदाश्रयत्वमानन्दभोक्तृत्वं च। निरुपाधिकत्वेन पुरुषत्वाभावात्। न तत्रोपाधेर्भानमपि कुतस्तत्कार्यस्य। जन्ममरणाभावेऽप्यग्रे कुतश्चित्संभूतं स्यात्। अत आह नायं कुतश्चिदिति। कदाऽपि कुतश्चित्कस्मादपि कारणान्न संबभूव संभूतः। किंच न कश्चित्कोऽप्यस्मान्न संबभूव। नन्वेवं कथमुच्येत सर्वकारणत्वमस्यैवोच्यमानत्वात्। कथं 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्' इति, यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य

भावाः प्रजायन्ते ' इत्यादिना । एवं सति न बभूव कश्चिदिति कथमुच्यते । सत्यं, तथाऽपि न शुद्धस्याऽऽत्मनः कस्यचित्कारणत्वं न किमपि कार्यं तस्य । चेदयं प्रपञ्चो ब्रह्मकार्यं तदा परिणामो वा विकारो भ्रम आरोपो वा संभवति न परिणामः संभवेत् । स पूर्वरूपविपर्यासादेव न पुनस्तस्य पूर्वरूपत्वं तदाऽधुना न कस्यापि तत्प्राप्तिः स्यात् । सा तूच्यते ' ब्रह्मविदाप्नोति परम् ' ' ब्रह्मविद्ब्रह्मैव भवति ' तस्मात्तन्निजेन रूपेण यथावदेवास्ति । न तथा विकारोऽपि स कारणानुरूप एवावगम्यते । नात्र तत् । विना निमित्तेन न तत्संभवति नाद्वितीये तद्वक्तुमर्हम् । न भ्रमोऽपि, कथं तस्य भ्रमबाध्यत्वं स्यात् । तस्य सद्वस्तुनः किं भ्रमजनकम् । ' अतोऽन्यदार्तम् ' इत्युक्तत्वात्सर्वमवस्तुभूतमेवास्ति नाऽऽरोपोऽपि स आकारसदृशत्वादेव संभवति । किमनेन सममन्यत् । तथा कथमयमनुपमेयः । न प्रतिबिम्बरूपमपि कार्यम् । पूर्णे सर्वगतेऽद्वितीये स वादो वक्तुं नोपपन्नः । तदन्यत्सर्वमन्यथाभासमानमनिर्वचनीयत्वाद्विवर्तरूपमेवास्ति न विवर्तस्य कार्यवत्कार्यत्वं संभवति नाधिष्ठानस्याकारणत्वम् । अत उक्तं ' न बभूव कश्चित् ' इति । ननु तदोक्तवाक्यैः कथं कार्यकारणभावावभिहितौ । सत्यं, तौ सोपाधिके न पूर्णे । ननु तदेवोपाधियोगात्सोपाधि नु । तथाऽपि विवर्तरूपस्य तस्य नाधिष्ठानदृष्ट्या भानं तदेकविधमेव तत् । अभिहितं च ' एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ' इति । सोपाधिके वर्तमानोऽपि तद्दृष्ट्यैव स भाति न वस्तुतस्तद्रूपे । अतोऽयमात्मा निजेन रूपेणाजः । सर्वान्तर्गतत्वेन वर्तमानोऽपि न जायते । तथा नित्यो विनाशवर्जितः । न म्रियते च तेन शाश्वतः । शश्वद्यथावदेव वर्तमानः । तथा स्थित्युद्भवलयातीतत्वेन पुराणश्चिरन्तनश्च । बहिर्दृष्ट्या सर्वशरीरे वर्तमानोऽपि शरीरे हन्यमानेऽपि न हन्यते सूक्ष्मत्वात् । यथा घटमठोपाधिभङ्गेऽपि नाऽऽकाशस्य तेन नाशस्तद्यथावदेव ॥ १८ ॥

एवं सति—

> हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
> उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

हन्ता हन्तृत्वाभिमानवांश्चेद्धन्तुं मन्यते तेन हतश्चेदात्मानं हतं मन्यते तर्ह्यपि तौ उभौ न विजानीतो यथार्थात्मस्वरूपज्ञानाभावात् ।

नायमात्मा हन्ति हननं तत्प्रकृतिगुणैरेवाऽऽत्मा तु नित्यं तदसङ्ग एव न च हन्यते हतत्वं देहस्यैव ॥ १९ ॥

यस्मादेवं तस्मात्पुनः कथं सः—

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽ-
स्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः
प्रसादान्महिमानमात्मनः ॥ २० ॥

अयमात्मा शुद्धोऽणोरणीयान् । यस्मादन्यत्सूक्ष्मं ततोऽप्ययं सूक्ष्म इत्यभिप्रायेणात्राणुशब्देन परमाणुर्विज्ञेयस्तस्मादपि सूक्ष्मतरः । अत एवोच्यते ‘ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ’ इति । तेन स्थानपरिच्छिन्नो भवेदतो महतो महीयान् । यस्मादन्यन्महत्ततोऽपि महीयान् । सावरणं ब्रह्माण्डमाकाशे वर्तते सोऽपि निजकारणे दशगुणाधिकेऽहंकारे तेन ततस्तन्महत्ततोऽपि तथा तत्कारणमव्यक्तं तदप्यत्र परिच्छिन्नं तच्छबलं ब्रह्म सर्वापेक्षया महत्ततोऽपि महीयान्स आत्माऽनन्तो यत्रेश्वरत्वमेकदेश्युल्लोलप्रायम् । नन्वाकाशान्महानप्यहंकारः परिच्छिन्नस्तथा महत्तत्वं ततो महदप्येवमेवमव्यक्तं शबलमपि तथा ततो महीयानात्मा परिच्छिन्न एव किं न । न यदन्यत्तस्माद्भावरूपं वाऽभावरूपं वस्तु न किंचिदस्त्युभयविलक्षणपदार्थाभावात् तदेव सर्वगतं महतो महीयानित्युक्तत्वात्ततोऽपि महीयान्स तेनानन्त एव सः । पुनः कथं सः । अस्य जन्तोर्जायतेऽजस्रं जन्तुर्जननशीलस्तस्य प्राणिनो गुहायां हृदयगुहायां निहितो यतस्तत्रैव तज्ज्ञानमस्ति । ननु महतो महीयान्स कथं परिच्छिन्नायां हृदयगुहायां प्रतिष्ठितो विज्ञेयः । यथा परिच्छिन्नेष्वपि घटमठोपाधिषु महानप्याकाशः प्रतिष्ठितो दृश्यते तथा महानप्यात्मा परिच्छिन्नाविद्योपाधियोगात्तथात्वेन वर्तमानः स हृदयगुहायां प्रतिष्ठितो विज्ञेयः । ननु च घटमठोपाधिष्वाकाश आवृतत्वेन परिच्छिन्न एव दृश्यते तथाऽऽत्मनोऽप्यनुभवकाले परिच्छिन्नत्वेनैवानुभवो भव्यो न पूर्णत्वेन । सत्यं, तत्र यथाऽऽकाशस्तथैवोपाधयो घटादिरूपाः सत्याः । नात्र तथाऽविद्योपाधयोऽनिर्वचनीयत्वेन विवर्तरूपास्तस्य तु भानं नाधिष्ठानदृष्ट्या संभवति तस्मान्निरावृतमनन्तं तच्छुद्धात्मरूपमनुभूयत उच्यते च ‘ अतोऽन्यदार्तम् ’ इति । एवमात्मा न । तस्यां हृदयगुहायां वीतशोको विगतः शोकः सांसारिको हानिसंभवो यस्य स विगताहंममत्वात् । नित्यं

सत्त्वप्रधानो विवेकवान्। तमुक्तमक्रतुमनवसायं निर्विकल्पं निर्गुणत्वादेवमात्मानं धातुर्दधाति सर्वमात्मनि धाता सर्वोपादानं परमात्मा तस्य प्रसादादनेकजन्माचरितकर्मोपासनाभ्यां प्राप्तप्रसन्नत्वात्पश्यति संप्राप्तसदाचार्यमुखादवाप्तपरविद्याप्रकाशितव्यतिरेकवृत्त्याऽऽत्मन्यात्मत्वेन साक्षात्करोति। तत आत्मनो महिमानं महत्त्वमविद्योपाधियोगात्प्रत्यगात्मत्वेन संप्राप्तपरिच्छिन्नत्वस्य तद्गुणकर्मवशत्वेन सांसारिकत्वस्य चापगमात्पूर्णत्वं निजानन्दसंतृप्तत्वं च पश्यति ॥ २० ॥

पुनः कथं स आत्मा—

आसीनो दूरं व्रजति शयानो याति सर्वतः ।<br>
कस्तं मतामतं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

आसीनो ज्ञानकर्मकरणव्यापारपरिवर्जनेन बाह्यप्रपञ्चं बहिस्त्यक्त्वा तत्संबन्धि प्रज्ञानं ततः प्रत्यावर्त्य हृदयगुहायां नीत्वा विमले चिदाकाशे तत्प्रज्ञानावलम्बं परित्यज्याऽऽत्मन्यात्मत्वेन निर्विकारनिर्विकल्पतया निजानन्दभोक्तृत्वेन या निद्रा तां परित्यज्य तत्स्वगतं निर्विकल्पमात्मप्रज्ञानमवलम्ब्य साक्षित्वयोगेनोपविशन्सन्दूरं व्रजति गुणावलम्बनेन देहादियोगात्संसारनिष्ठत्वेन तत्सङ्गमुक्तत्वाद्दूरं गच्छति। शयानस्तत्रोक्तप्रकारेण सर्वावलम्बपरित्यागेन निर्विकल्पत्वेनाऽऽत्मनि स्वपन्सन्सर्वतः सर्वत्र याति गच्छति तस्मिन् पूर्णेऽनन्ते तन्मयत्वेनावस्थितस्तादृगेव सर्वगतो भवति। कः पुमांस्तं देवं द्योतमानं स्वप्रकाशं मतामतं मतं चामतं च मतामतं मत एव चेत्तदा ज्ञानज्ञेयज्ञातृत्वभावशून्यस्तस्मान्न मतः। अतोऽमतश्चेत्तर्ह्यपरोक्षत्वेनानुभूयमानस्तेन नामतोऽपि। तत्र यज्ज्ञानं तदज्ञानमज्ञानं ज्ञानं तस्माज्ज्ञानाज्ञानमुक्तः। सोऽनुभवस्तस्य करणमकरणं प्रज्ञानावलम्बयोगात्। अतः करणाकरणाभावशून्यः। मदामदमिति पाठान्तरे तु मदो हर्ष आनन्द एव। अमदोऽहर्षो निरानन्दः। एवमुभयस्वरूपः कथं, स आत्मा सच्चिदानन्दरूपोऽपि यथा प्रज्ञाननिष्ठत्वेन ज्ञातृत्वयोगादचिन्मयः। एवमानन्दनिष्ठत्वेन भोक्तृत्वयोगान्निरानन्दरूपः। तदसङ्गत्वेन सदवगमकत्वेनाऽऽनन्दमयोऽपि। तेन मदामदमित्युच्यते। स गुरुगम्यो नान्येन यत्नेन साध्योऽतो मदन्यो मद्गुरुरूपादन्यो मां हित्वा ज्ञातुमपरोक्षत्वेनार्हति

योग्यो भवति । सदाचार्यप्रसादादेव गम्यो न परोक्षवादेनापरविद्यारूपेण ॥ २१ ॥

पुनः—

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२॥

शरीरेषु स्थूलादिषु नानाविधेषु तदभिमानित्वेन वर्तमानमप्यशरीरं तदावरणरहितं तज्ज्ञानशून्यत्वात् । तेषु शरीरेष्वनवस्थेष्वनवस्थितेष्वितस्ततो विहरत्स्वपि नानाविधकर्मयोगेणेहामुत्र च भ्रमणशीलेष्वप्यवस्थितं यथावदेव वर्तमानमचञ्चलमनन्तत्वात् । ननु तदा शरीरावलम्बः कस्य, प्रत्यक्चैतन्यस्य । किं तत्, पूर्णमेवाविद्योपाधियोगात्प्रत्यक्त्वं प्राप्तं तत् । तदा कथं तदशरीरमित्युच्यते । सत्यं शरीराण्यविद्याकृतानि, सा विवर्तरूपा तदा तत्कार्याणि तान्यपि तथा विवर्तस्य भानं न सत्याधिष्ठानदृष्ट्याऽतः सत्ये तदधिष्ठाने पूर्णचैतन्ये तेषां भानमपि नास्ति तदा कुतस्तैः शरीरित्वं तस्य तस्मादशरीरं तत्तेनाचञ्चलम् । अविद्यागुणदृष्ट्या शरीरेष्ववस्थित इति दृश्यते तथाऽपि महान्तमुक्तप्रकारेण महतो महीयांसम् । उच्यते च 'तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ' । इति । विभुं सर्वमात्मन्यवस्थापयितुं समर्थं सत्तारूपत्वात् । एवंविधमात्मानं धीरो धीमान्विवेकी मत्वाऽऽत्मन्यात्मत्वेनोक्तप्रकारेण बुद्ध्वा न शोचति सांसारिकस्त्रीपुत्रपदार्थवियोगे शोकं करोति । सर्वत्रैकस्यैवाऽऽत्मनस्तदन्यस्य तु सर्वस्य मिथ्यात्वस्य दर्शनात् ॥ २२ ॥

अथ किं तद्विज्ञाने मुख्यं साधनं तदाह—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना
श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष
आत्मा विवृणुते तनूꣳ स्वाम् ॥ २३ ॥

अयमेतावन्तं कालमभिहित आत्मा न प्रवचनेन वेदशास्त्रादीनां प्रपठनेन लभ्यो लब्धुं शक्यः । न मेधया तज्जनितप्रज्ञाविशेषेणापि लभ्यः । तथा न बहुना श्रुतेन पुराणादीनां श्रवणेनापि लभ्यः । अत एवोच्यते 'नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् । तमेवैकं

जानथाऽऽत्मानमन्या वाचो विमुञ्चथ' इति। ननु तदा शास्त्राध्ययनाद्य-सदेव किम् । अनेकजन्मकृतनिष्कामकर्मोपासनाभ्यां विशुद्धसत्त्वो विवेकवांस्तं प्रत्यास्थामात्रजनकमेव तन्न साक्षात्कारस्य। अशुद्धस-त्त्वमविवेकिनं प्रति तु रजस्तमोगुणोद्भवेनान्यथाबुद्धिजनकत्वेनानर्था-पाद्येव तत्। ननु तदा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेने-दं सर्वं विदितं भवति' इति किमुच्यते । सत्यं, तदधिकारिणं प्रति सदाचार्येभ्यः परविद्याविषयम् । अत एवोच्यते 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति। अत्राप्यग्रे तदेव मुख्यं साधनमुच्यते । यमेवान्तेवासिनं सद्भावेनोक्तेन विधिना शरणागतमधिकारिणमेषोऽभिहित आत्मा वृणुतेऽङ्गी करोति तेनैव लभ्यः। ननु पूर्वाभिहित आत्मा तु 'न जायते म्रियते वा विपश्चित्' इत्यादिवाक्यैरुपपादितस्तस्य कथं वरणं संभवेत्। सत्यं, तथा न केवलस्य शुद्धस्य विश्वसर्जनं संभवति। उच्यते च 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकान-सृजत' इत्यादिना । तदा कथं तद्विज्ञेयं न केवलात्तस्मादेवोत्पत्तिः स्वगतचित्प्रकृत्यवलम्बनेन यदीशरूपं तस्यैव तत्कार्यं विज्ञेयम्। एवम-त्रापि स एव परमात्माऽनेकजन्मकृतनिष्कर्मोपासनायोगेनाऽऽराधितो गुरु-रूपेणाऽऽविर्भूय यमेव वृणुतेऽङ्गी करोति परविद्याप्रदानेन तेनैव लभ्यः। कथं, तस्य सतोऽन्तेवासिन आचार्येण सता प्रसद्य वृतस्यैष प्राग्वरणाल्लोके लोकवद्वर्तमान आत्मावरणानन्तरं तत्प्रसादतः स्वामा-त्मीयां तनूं तन्यते तनूः शरीरं तां तनूं शरीरं सच्चिदानन्दमयं पूर्णं पूर्व-मेव यथावदेवावस्थितं वृणुते तदेवाहमिति मन्यते ॥ २३ ॥

किंच—

नाविरतो दुश्चरितो नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि विज्ञानेनेममाप्नुयात् ॥२४॥

अविरतो विषयेभ्यो विरामं दुःखदर्शनाद्वा विवेकाद्वा वैराग्यमप्राप्त-स्तेन दुश्चरितो दुष्टं निषिद्धं चरितमाचरणं यस्य सोऽनधिकारीममुक्त-विधमात्मानं नाऽऽप्नुयात्प्राप्तुं शक्नुयात्। तथाऽशान्तः क्रोधी परोपदेशा-सहनशीलो नेममाप्नुयात्। असमाहितोऽनिन्द्रियनिग्रहत्वान्नेममाप्नुयात्।

अशान्तमानसो वाऽपि न शान्ता मानसा मनःसंभूता विकारा नानाविधसंकल्परूपा यस्य सोऽशमी नेममाप्नुयात् । सोऽप्यसच्छिष्य एव। तत्रये मुख्यं साधनमाह—एनमुक्तविधमात्मानं प्रज्ञानेन विशुद्धेनाऽऽप्नुयात्प्राप्तुं शक्नुयात् । तदेव मुख्यं साधनम् । ननु तदा किमेवमुक्तं 'नायमात्मा प्रवचनेन लभ्यो न मेधया ' इति । सत्यं, सा मेधा शास्त्रविषया तेन वादविवादपराऽतो रजस्तमोमयी तया सद्गुरुवाक्ये कथं विश्वासस्तदभावे कथं ग्रहणं विना तेन कुत आत्मविज्ञानं तद्गुणद्वयनिरासं विना कथं स विशुद्धसत्त्वोऽधिकारी । तस्मान्नोपपन्ना साऽत्र मेधा । योऽनेकजन्माराधितपरमेश्वरकृपयाऽनेकविधसंसारप्रदसंचितकर्मविनाशाद्रजस्तमोगुणविलयेन नित्यं सत्त्वेन प्रधानेन युक्तः पुमानपरोक्षत्त्वेन परब्रह्मात्मविज्ञानाय सद्गुरुदर्शनेऽत्यास्थावान्मुमुक्षुश्च तदुपदिष्टवाक्येऽतिविश्रब्धस्तद्ग्रहणे क्षमस्तदनुरूपमननिदिध्यासयोश्च भवति तेनैव तद्वेदनमस्ति नान्येन । ननु कथं शास्त्रश्रवणमनुपपन्नं यद्विरुद्धसिद्धान्तस्योपपादकं तत्त्याज्यमेवानर्थस्याऽऽपादकत्वात्। यद्वेदप्रणीतमध्यात्मयोगानुरूपं शास्त्रं तन्मुमुक्षुतया रजस्तमोभावपरित्यागाद्विवादबुद्ध्यपगमेनाभ्यस्तं परोक्षत्वेन वस्तुविज्ञानकरं तेनापरोक्षविज्ञान आस्थोत्पत्तिस्तया सद्गुरुदर्शनेऽपि ततस्तत्प्रज्ञानसंप्राप्तिस्तेन तदात्मवेदनं तस्माच्छास्त्रीयं ज्ञानं तत्साधनभूतम् । ननु 'प्रज्ञानं न वेद' इत्युच्यते कथं तेनाऽऽत्मानुभव उपपाद्यते । सत्यं, ज्ञेयज्ञातृत्वयोगेन प्रज्ञानं नाऽऽत्मानं वेद । तेन श्रीसद्गुरुप्रसादलब्धेनाऽऽदौ देहावस्थात्रयनिरासेन तदभावमनुभूय पश्चाज्ज्ञेयज्ञातृत्वभावपरित्यागेनाऽऽत्मन्यात्मत्वेन निर्विकल्पत्वेनावस्थितेनाऽऽत्मवेदनं भवति । तदन्यदेवेति चेत् तदा न तेन तदनुभवप्रकाशनं स्यात्तत्तु दृश्यते गुरुशिष्यसंवादेऽतः प्रज्ञानेनेममाप्नुयात् ॥ २४ ॥

विना तेन न केनापि ज्ञातुं शक्य इत्याह—

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।<br>
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

यस्याऽऽत्मनः परब्रह्मरूपस्य ब्रह्म च ब्राह्मणजातिः क्षत्रं च तज्जातिश्चोभे ओदनो भवतः। स तद्भक्षकः। तदुपलक्षितं सर्वमपि विज्ञेयं प्रलये समाधौ वा सर्वस्य तदाकारत्वसंभवनात् । सर्वस्य नियन्ता मारकः स न तदन्नमिति चेत् । मृत्युर्यस्योपसेचनं परिषेचनं सह मृत्युना सर्वमत्ति तस्मा-

न्मृत्योरपि स मृत्युः। अत एव तस्य मृत्युत्वमुच्यते—'नैवेह किंचनाग्र आसी-न्मृत्युनैवेदमावृतमासीत्' इति। इत्थेत्थमनेन प्रकारेण तमात्मानमद्वैतं को वेद विना प्रज्ञानेन ज्ञातुं क्षमेत। यत्राऽऽत्मनि स एक एव न नाना न नानात्वेन तिष्ठति। किं तत्। न तस्याऽऽत्मन इतरत्वेन ज्ञानं संभवति। तस्मात्सर्वोपसंहारे प्रलये वेदितव्यश्चेत्तदा सर्वं साम्यान्तर्गतं भूत्वा तदे-करूपं भवति तदा केन कथं स विज्ञेयः। समाधावपि न ज्ञातृत्वेन तन्निरासात्तन्मयेन प्रज्ञानेनैवान्तः प्रज्ञानेनैव वेदितव्यः। न केवलस्य सन्मात्रस्य चितं विना चिन्मयत्वम्॥ २५॥

इति श्रीदिगम्बरानुचरविरचिते ज्ञानकाण्डे कठवल्ल्युपनिषदर्थ-प्रकाशे द्वितीया वल्ली व्याख्याता॥ २॥

---

इत्यात्मनः शुद्धरूपस्य वर्णनं कृत्वा तमेव प्रकृतियुक्तमधुना वर्णयति—

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ
परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः॥ १॥

सुकृतस्य पुण्यस्य लोके लोक्यते प्राप्यते सुकृतं फलरूपेण यत्र स लोकस्तस्मिन्नतः परमे प्रकृष्टतमे परार्धे प्रशस्ते ब्रह्मभुवनादिरूपे स्वर्लोक ऋतं पिबन्तावृतं गतिमदस्थिरं भोगेनान्तवत्सुकृतकर्मफलरसं पिबन्ता उपभुञ्जानौ। गुहामुक्तपूर्वां हृदयरूपां प्रविष्टौ सर्वदाऽनुप्रविश्य वर्तमानौ। एवंविधौ प्रत्यक्परमात्मानौ ब्रह्मविदो ब्रह्म परमक्षरं विदन्ति ते छाया-तपौ छाया चाऽऽतपश्च छायातपौ ताविव वदन्ति। कथं, यथा छायातपौ परस्परविरुद्धधर्माणावित्याभासमानावप्यभिन्नरूपौ विना प्रकाशेन कुत-श्छाया यत्र स तत्सत्तारूपस्तत्रैव सा प्रकाशमयी तदावरणभूता। एवम-त्रापि प्रत्यक्परमात्मानौ परस्परविरुद्ध धर्माणावप्यभिन्नरूपावध्यात्माधि-दैवतान्वययोगात्। कथं तयोरुक्तं साम्यमिति चेत्। ईश्वरप्रकृतिर्माया साश्रया व्यामोहिनी तेन सर्वज्ञस्तया सह नित्यं सच्चिदानन्दरूपो निर्विकार एव तेनाऽऽतपस्थानीयः। जीवप्रकृतिरविद्या साश्रयव्यामोहिनी नित्यं गुणप्रधानाऽज्ञानान्यथाज्ञानवती तद्युक्तत्वात्तत्प्रधानत्वेन जीवोऽपि तथैव

तेन छायास्थानीयः । इत्यनयोस्तत्सारूप्याद्ब्रह्मविदस्तथा वदन्ति । ननु तदृतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे इत्यनेन कथं परमात्मनोऽपि समगुहानुप्रवेशः कर्मफलभोगोऽप्युच्यते । सत्यं तच्छुद्ध-स्वरूपोपलब्धिर्गुहायामेवास्ति । श्रूयते च 'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं संनिधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूप-ममृतं यद्विभाति ' इति । कथं तस्यानेककर्मफलभोग इति चेत् । न स्वतः स संभवति जीवोऽयं तदंशरूपो नांशांशिनोर्भेदोऽतस्तदन्वयेन तथोक्तम् । यद्वा सत्तारूपत्वेन तत्र वर्तमानत्वात् । तथाऽपि सोऽसङ्ग एव । तथा ये पञ्चाग्नय आहवनीयोऽन्वाहार्यपचनो गार्हपत्यः सभ्यश्चेति चत्वारः श्रौताः स्मार्तश्चौपासन इति पञ्चसंख्याका अग्नयो येषां ते वदन्ति ये च त्रिनाचिकेतास्त्वया नचिकेतसा प्राप्तोऽतस्तव नाचिकेत-सोऽयं नाचिकेतोऽग्निस्तस्य चयनविधानप्रतिपादका मन्त्रसमूहास्त्रयो नचिकेता येषां ते त्रयाणां नाचिकेतानामध्येतारस्ते वदन्ति । तवैव नाम्ना भविताऽयमग्निरिति वरदानेन तत्कालमारभ्य तस्याग्नेर्नाचिकेत-संज्ञा । तत्प्रतिपादनेन तेऽपि नाचिकेता भवन्त्विति वरदानकल्पं त्रिना-चिकेता इति मृत्युवचनम् । तेषामध्येतारोऽपि तत्र प्रतिपाद्यमग्निं नाल-भन्तातो नचिकेताः स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यमिति द्वितीयेन वरेणावृणीत ॥ १ ॥

यस्मादेवं तस्मात्—

> यास्ये तुरीये जानानामक्षरं ब्रह्म यत्परम् ।
> अभयं तितीर्षतां पारं नाचिकेतᳬ शकेमहि ॥ २ ॥

यास्ये कर्मोपासनाकृतेश्वराराधनरूपयत्नसाध्ये तुरीये चतुर्थे शुद्ध-सत्त्वप्रधानत्वेन प्रज्ञानमये देहे । स्वभावादवस्थात्रयप्राप्तिः सर्वेषामस्ति न तुरीयायास्तस्माद्यास्ये तुरीये यदक्षरं न क्षरत्यक्षरं तेनावृद्धिमदपि परं सर्वोत्कृष्टमभयं यत्र भयं नास्त्येवाद्वितीयत्वात् । पारं संसारसमा-प्तिरूपं तज्जानानां ज्ञातुं शक्नुवन्ति जानास्तेषां जानानां जनानामधि-कारिणां तितीर्षतां संसाराब्धिं तर्तुमिच्छूनामन्तेवासिनां नाचिकेतं नचिकेतसा त्वया लब्धमतो नचिकेतसस्तवेदं नाचिकेतं वक्तुमुपदेष्टुं च शकेमहि शक्नुयाम शक्ता भवेम ॥ २ ॥

पुनस्तमेवोपक्रान्तं वर्णयति—

आत्मानꣳ रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

आत्मानं प्रत्यगात्मानं रथिनं रथोऽस्त्यस्य रथी तं तस्याधिष्ठातारं विद्धि जानीहि । शरीरं स्थूलं रथमेव च तत्तुल्यत्वाद्विद्धि । बुद्धिं तु प्रज्ञानं सारथिं विद्धि । प्रज्ञानप्रेरितान्येव ज्ञानकर्मेन्द्रियाणि शरीरं चेतस्ततो व्यवहरन्ति । मनः संकल्परूपं प्रग्रहमेव चाश्वनियमनरश्मिं विद्धि । तत्संकल्पेनैव तानि बद्धानि यथासंकल्पं गच्छन्ति न तदभावे ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

इन्द्रियाणि ज्ञानकर्मकरणानि हयानश्वानाहुर्विवेकिनः । तैरेव शरीररथस्य गमनप्रवृत्तिर्यतः । तेषूक्तेष्विन्द्रियहयेषु विषयाञ्छब्दादीन्गोचरानुपभोग्यान्विद्धि । तैरेव विषयं गत्वा तदुपभोगः क्रियते । यस्मादेवं तस्मान्मनीषिणो विवेकिन आत्मा रथी शरीरं रथमारुह्येन्द्रियमनोयुक्तमिन्द्रियैर्मनसा च युक्तं विषयजातं भोक्तेत्याहुर्ब्रुवन्ति । यत्र मनोगोचरत्वं तत्र कुत इन्द्रियप्रवृत्तिस्तदभावे कुतो भोगः ॥ ४ ॥

अथानेनैव रथेन संसारमोक्षमार्गप्राप्तिरस्तीति कथ्यते—

यस्त्वविज्ञानवान्भवत्ययुक्तमनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु रथ्यविज्ञानवानविशिष्टबुद्धिमान्भवति । यस्य सारथिरूपा बुद्धिरविवेकप्रधाना सारासारविचारशून्या तेन मार्गामार्गज्ञानहीनाश्वप्रवृत्तिज्ञानरहिता । तेनायुक्तमनसाऽयुक्तेनाश्वजयेऽनुपपन्नेन प्रग्रहरूपेण मनसा सदा युक्तो भवति । तस्मात्तस्येन्द्रियाण्यश्वरूपाण्यवश्यानि न तद्वशं गतानि । तत्र दृष्टान्तः—सारथेर्दुष्टाश्वा इव । यथा दुष्टाश्वा दुष्टाश्वाविनीतास्तेऽश्वाश्च ते प्रग्रहेण सह पलायिताः सारथेरवश्या भवन्ति तथा तान्यवश्यानि भवन्ति । तेन प्रग्रहेण मनसा बुद्ध्या च सारथिरूपया सह रथिनं घोरे कामक्रोधाद्युपद्रावकावगुणवनचरसंकीर्णेऽमार्गे पातयन्ति ॥ ५ ॥

यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्तु सारथिर्विज्ञानवान्विशिष्टज्ञानवान्भवति । यस्य सारथिरूपा बुद्धिः सारासारविचारवती मार्गामार्गज्ञाननिपुणा सत्त्वप्रधाना तया युक्तेन समाहितेनासत्संकल्पशून्येन मनसा सदा युक्तः । न कदाऽप्ययुक्तेन मनसा तस्य पुंस इन्द्रियाणि हयरूपाणि वश्यानि वशं गतानि भवन्ति तेषां संकल्पमूलत्वात् । कस्य क इव । सारथेः सदश्वा इव । यथा सदश्वाः सन्तश्च तेऽश्वाः प्रग्रहसारथिवश्या भवन्ति तथा तद्वशानि भवन्ति ॥ ६ ॥

तेन युक्तायुक्तबुध्द्यादियोगेन किं तयोः प्राप्यं तदाह—

यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥

यस्त्वविज्ञानवानुक्तविधो भवति तेनामनस्को न विद्यमानं वश्यं मनो यस्य सोऽमनस्कः । सदा सर्वदाऽशुचिस्तत्संकल्पवश्यत्वेन नानाविधभोगवासनयाऽसत्कर्मकृत्तेनाशुचिरेव नित्यम् । सोऽनधिकार्यनेकविधाशुभाक्रियमाणसंचितयोगान्न तत्पूर्वोक्तमक्षराख्यं यस्माद्भूयो न निवृत्तिस्तत्पदमाप्नोति । किंतु संसारं च संसारमेवानेकविधदुःखसागरमधिगच्छति प्राप्नोति ॥ ७ ॥

यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥

यस्तु विज्ञानवान्भवति तेन समनस्को नियतमनस्कोऽसत्संकल्पशून्यो मुमुक्षुः सदा शुचिरकर्मविकर्मपरिवर्जनेन नित्यं सत्त्वप्रधानत्वाद्भवति । स तु निर्धारेण तच्चिदानन्दमयमभयं पदमाप्नोति किं तत् । यस्माद्यत्पदं प्राप्य भूयो न जायत उत्पद्यते न पुनः संसारसागरमवाप्नोति ॥ ८ ॥

यस्मादेवं तस्मात्—

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥९ ॥

यस्तु पुमानुक्तप्रकारेण विज्ञानसारथिर्विज्ञानं सारथिर्यस्य स मनःप्रग्रहवान्नरः सोऽध्वनो मार्गस्य पारमवसानं समाप्तिमाप्नोति नेतरवज्ज-

न्ममरणयोगेन पुनः पुनरिहामुत्र च भ्रमणशीलः । योऽनेन संसारं तीर्त्वा पारोऽवाप्तस्तद्विष्णोः परमात्मनः सर्वेश्वरस्य परमुत्कृष्टं निरुपाधिकं पदम् । कुतो विष्णुशब्देन परमात्मा विज्ञेय इति चेत् । श्रूयते पुराणेषु—'तमादिदेवं चिद्रूपं केचिद्रुद्रं वदन्ति हि । केचिच्च विष्णुमपरे धातारं ब्रह्म चापरे' इति । अत्रापर एव विष्णुर्विज्ञेयश्चेत् । न तस्यैव तत्परं पदं देवतात्रयस्यापि संभवति तस्मात्पर एवात्र विज्ञेयः । यद्वा वेवेष्टि सर्वं विष्णुस्तस्य व्यापकस्य ब्रह्माण्डाधारत्वादन्तर्बहिश्च वर्तमानस्य परमात्मनः परमुत्कृष्टतमं निरुपाधिकं पदं मायासङ्गत्वेन नित्यं तत्स्वपदे योगनिद्रयाऽवस्थितत्वात् ॥ ९ ॥

तत्पदं स्तौति—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥

इन्द्रियेभ्यः श्रोत्रादिभ्योऽर्था विषयाः संकल्परूपाः परा ह्यन्तरङ्गा एव । अर्थेभ्यश्च वासनारूपेभ्यो मनः परमन्तरङ्गं तदधिष्ठानत्वात् । ननु किं बाह्यार्थान्परित्यज्य वासनारूपा अर्था गृहीताः । बाह्यार्थेभ्य इन्द्रियाणां परत्वं प्रत्यक्षतया सर्वैरनुभूयत एव । अतस्तदुपपादनमनर्थकमेव । सूक्ष्माणामेवेन्द्रियेभ्यः परत्वविज्ञानायेदमुक्तम् । मनसस्तु परा बुद्धिस्तत्साक्षिभूतत्वात् । बुद्धेर्महांस्त्रिगुणाहंकाररूप आत्मा परः॥१०॥

महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ११ ॥

महतोऽहंकारात्तस्मादव्यक्तं मायारूपं परमात्मनो देहद्वयबीजभूतत्वात्सूक्ष्मं तृतीयं परम् । तदंशत्वादात्मनः कारणशरीरमत्राव्यक्तशब्देन विज्ञेयम् । तत्त्रिगुणाहंकाररूपाल्लिङ्गशरीरात्परमेव । तस्मादव्यक्तात्पुरुष उपाध्याश्रयः परः । पुरुषान्न परं किंचित्स एव सर्वस्मात्परः । सा काष्ठा परमा दशा निर्विकल्पा । तस्मिन्पुरुषे पूर्णे भावनाद्वयनिरासेन भूमिकात्रयमुल्लङ्घ्य निर्विकल्पतया सुलीनचित्तत्वेन तद्रूपेणावस्थानमेव दशा सा परा गतिर्मोक्षाख्या । यां प्राप्य न पुनः संसारदर्शनमस्ति । ननु कथमुपाध्याश्रयः पुरुष एव परत्वेनोच्यते पराक्षरस्य विद्यमानत्वे न तयोर्भेदे यच्छुद्धं तदेव शबलं पुरुषरूपमित्यभेददृष्ट्योच्यते । परस्यापि

वाचकः पुरुषशब्दोऽस्ति सर्वासु पूर्षु शयनात्पुरुष इति तासु निद्रितव-न्निर्विकल्पेन सत्तारूपत्वेन वर्तमानत्वात् ॥ ११ ॥

किंच—

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

एष पूर्वोक्तः शुद्धात्मा सर्वेषु भूतेषु गूढोऽविद्यातत्कार्यदेहचतुष्टया-वृतो हृदयगुहायां वर्तमानत्वात् । अत आत्मा प्रत्यगात्मभूतः स न प्रकाशते प्रकटो भवति साक्षात्काराय । तदा किं साक्षात्काराभाव एव, न, सूक्ष्मदर्शिभिः सूक्ष्मं सूक्ष्मतरं द्रष्टुं शीलमेषां तैः सारासारवस्तुवि-ज्ञानवद्भिः सूक्ष्मया गुणयोगात्साक्षित्वादिरूपेण स्थूलत्वमसंप्राप्तयाऽ-ग्र्ययाऽग्रे भवाऽग्र्या तया निर्विकल्परूपया बुद्ध्या प्रज्ञानेनाधिष्ठाना-कारेण दृश्यत आत्मन्येवाऽऽत्मत्वेनानुभूयते ॥ १२ ॥

तत्साधनमाह—

यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति यच्छेत्तच्छान्त आत्मनि ॥ १३ ॥

प्राज्ञः प्रकर्षेण जानाति प्रज्ञः प्रज्ञ एव प्राज्ञो विचक्षणो गुरुदत्त-प्रज्ञावान्विविक्तदेश आसनं प्रतिष्ठाप्योपविश्य समं कायशिरोग्रीवं धृत्वा स्वनासाग्रे दृष्टिमवधार्य वाग्वाचं मनसि तत्कारणे यच्छेद्वक्तव्यपरित्या-गाद्वाङ्मूलत्वेन मनोनिष्ठो भवेत् । कथम् । बाह्यार्थावलम्बं त्यक्त्वा तन्निष्ठं प्रज्ञानं ततः प्रत्यावर्त्य वाङ्निष्ठं कुर्वीत । किं तद्वाक्स्थानम् । वैखरीरूपायास्तस्या दन्तोष्ठाद्येव न तन्मुख्यं रूपम् । तत्पूर्वं तु मध्यमा ध्वनिरूपा तस्याः स्थानं कण्ठदेशः । मध्यमायास्तस्या अपि पूर्वरूपं पश्यन्ती सा संकल्परूपा तस्याः स्थानं ततोऽप्यन्तरङ्गं तस्या अपि पूर्वरूपं परा सा मनोरूपा तत्स्थानं हृदयमेव । इति वाङ्मूलत्वेन मनो-रूपस्याऽऽत्मनो हृदय एव नित्यमवस्थानमिति बुद्ध्वा बाह्यशरीरं बहि-स्त्यक्त्वा तदसङ्गत्वेनान्तरङ्गतया संकल्पाधिष्ठाने मनोमय आत्मनि निस्तिष्ठेद्यावत्तत्र चिदाकाशानुभवः । ततस्तद्दृष्ट्या स्थूलादिसर्वबाह्य-प्रपञ्चाभावोऽनुभूयते तज्ज्ञानं रजस्तमोयोगान्मनोरूपमभावानुसंधानेन तन्निष्ठं तदनुसंधानत्यागेन प्रत्यावर्त्याऽऽत्मनि प्राज्ञरूपे यच्छेत्संकल्पपरि-त्यागात् । तदेव लिङ्गदेहनिरासेन कारणदेहनिष्ठत्वम् । ततस्तज्ज्ञानं

तमः प्रधानं सर्ववृत्तिविलयेन जडत्वरूपं महति तत्कारण आत्मनि महाकारणरूपे यच्छेत्तदवधानसाक्षित्वेन तदवलम्बं संकल्पांश्च त्यक्त्वा साक्षिस्वरूपेणैवावतिष्ठेत् । तत्प्रज्ञानं शुद्धसत्त्वप्रधानत्वेन महाकारणदेहरूपं शान्तं तद्द्रष्टृत्वं दृश्यदर्शनसापेक्षं तन्निरासे किं तेनावलम्बितेन न तेनाप्यात्मविभानं भवत्युक्तं च 'प्रज्ञानं न वेद' इति सोऽदृष्टो द्रष्टा श्रुतः श्रोता तद्द्रष्टृत्वपरित्यागेन वेदितव्यस्तस्मात्तच्छान्तं साक्षित्वधर्मपरित्यागेन निर्विकल्पतया कृत्वाऽऽत्मनि शुद्धे पूर्णे तन्मयत्वेन यच्छेत् । तेनैवाऽऽत्मत्वेन निर्विकल्पतयाऽपरोक्षत्वेनाऽऽत्मानुभवः । एवं नित्यशः शनैः शनैः शान्तसत्त्ववृत्तिं कृत्वा नित्यं तन्मयत्वेनावस्थानं सा काष्ठा सा परा गतिः ॥ १३ ॥

एवं संसाध्य प्राप्तदर्शेन किं कार्यं तदाह—

उत्तिष्ठन्तं जाग्रतं प्राप्य वरान्निबोध तम् । क्षुरस्य
धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति॥१४॥

उक्ताभ्यासेन नित्यशः कृतेन तमात्मानमुक्तविधमुत्तिष्ठन्तं सदोत्थितमेव नतु शयानं तमोभावेन नित्यं चिदानन्दमयत्वेन वर्तमानत्वादतो जाग्रतं स्वस्मिन्स्वप्रकाशेनैव जागरां प्राप्नुवन्तं न तु स्वपन्तं प्राप्य संसिद्धसाधनः परानन्यानन्तेवासिनोऽधिकारिणः परीक्ष्य निबोध निबोधय । यतो यथा क्षुरस्य धारा निशिता तीक्ष्णाऽतो दुरत्यया दुःखेनाप्यत्येतुमशक्या तथा तत्पथः पन्थानं दुर्गं दुःखेन गम्यते दुर्गं कवयो ज्ञानिनो वदन्ति । अतः परान्सम्यक्परीक्ष्य निबोधय । अपरीक्षिता अनधिकारिणो निबोधिताश्चेत्तर्हि ते तस्मिन्दुर्गे पथि वर्तितुमजानन्तस्तत्पदमलब्ध्वा ततश्च्युताः सिद्धंमन्याः कर्मादित्यागेन भ्रश्येयुः ॥ १४ ॥

अथैवंरूपदुर्गमविज्ञानेन किं स्यात्तदाह—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यम-
गन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ १५ ॥

यदात्मरूपं सलिलवन्निरन्तरत्वेन परिपूर्णमप्यशब्दमविद्यमानः शब्दो यस्य तदशब्दम् । अस्पर्शमविद्यमानस्पर्शम् । अरूपमविद्यामानरूपम् ।

तथाऽरसमविद्यमानरसम् । नित्यं सर्वदाऽगन्धवच्च न गन्धवदगन्धवत् । शब्दादयो भूतानां गुणा यद्भौतिकं तस्यैव स्युर्यद्भूतकारणं परं परातीतमन्तरतरं तस्य कथं स्युः । पुनः कथम् । अव्ययं व्ययरहितं यथावदेव वर्तमानम् । अनाद्यविद्यमान आदिः कारणान्तरं यस्य तदना-दिसिद्धम् । अनन्तमविद्यमानोऽन्तः परिसमाप्तिर्यस्य तत् । महतः परं महान्सर्वजगतः कारणं परमात्मा महामायाश्रयस्तस्मादपि परमेताव-दिति तस्य महत्त्वं केनोच्येत । अत एवोक्तपूर्वम् ' महतो महीयान् ' इति । ध्रुवमचञ्चलं सर्वत्र तदेव कुत्र चलितव्यं सर्वमाकाश एव चलति स आकाशस्तस्मिन्नेकदेशी विवर्तः । यदेवं विशिष्टं तमात्मानं पूर्णचैत-न्यरूपं निचाय्याऽऽत्मन्यात्मत्वेनैव पूजयित्वा नित्यं निष्ठाय दृशां प्राप्य मृत्युमुखान्मृत्योर्मरणस्य मुखात्प्रमुच्यते प्रमुक्तो भवति ॥ १५ ॥

स्वोपदिष्टं स्तौति—

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥

नाचिकेतं नचिकेतसा त्वया लब्धमतो नचिकेतसस्तवेदं नाचिकेतं मृत्युप्रोक्तं मृत्युना मया प्रोक्तं सनातनं चिरन्तनं नास्मिन्नेव काले निर्वृ-त्तमुपाख्यानमुक्त्वा पठित्वा श्रुत्वा च मेधावी सुमेधास्तत्पठनश्रवणपु-ण्येन ब्रह्मलोके ब्रह्मणश्चतुराननस्य लोके सत्याख्ये महीयते पूज्यो भवति ॥ १६ ॥

किंच—

य इदं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि । प्रयतः
श्राद्धकाले वा तदानन्त्याय कल्पते
तदानन्त्याय कल्पत इति ॥ १७ ॥

यः पुमानिदं परमं गुह्यमनधिकारिभिरश्रव्यं नाचिकेतमुपाख्यानं ब्रह्मसंसदि ब्राह्मणसभायां श्रावयेद्ब्राह्मणान् । श्राद्धकाले वा प्रयतः सन्भुञ्जानाञ्श्रावयेत् । तस्य तच्छ्रावणं श्रोतृपुण्यस्य श्राद्धस्य चानन्त-

त्वाय कल्पते कल्पेत समर्थं भवेत् । तदानन्त्याय कल्पत इति द्विरुक्तिः प्रकरणसमाप्त्यर्था ॥ १७ ॥

इति श्रीमदादिगुरुदत्तात्रेयदिगाम्बरानुचरविरचिते ज्ञानकाण्डे
कठवल्ल्युपनिषदर्थप्रकाशे तृतीया वल्ली
व्याख्याता ॥ ३ ॥

---

पूर्ववल्ल्यां परब्रह्मोपपादनं कृतं तज्ज्ञानमपि गुहायामात्मत्वेनैवास्तीत्युक्तमेवं सति संनिहितस्याऽऽत्मनो ज्ञानं सर्वेषामपि किं न भवतीत्यत्रोच्यते—

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्परा-
न्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्य-
गात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

स्वयंभूः स्वयमेवाऽऽत्मन एव निमित्तान्तरमनपेक्ष्य भूतः संभूतः स्वयंभूः । ननु कथं सिद्धस्य पुनः संभवश्चेत्तत्परिणामविकारवादाभ्यां मन्तव्यं तर्हि विना निमित्तेन तत्संभवनं कुतः । सत्यं तस्मान्न परिणामः पूर्वरूपाभ्रष्टत्वान्न विकारोऽपि पृथक्समर्थनिमित्ताभावात् । तदा कथमयं स्वयंभूरिति चेत् । शुद्धादात्मनः स्वगतचित्प्रकृतिमवलम्ब्य शबलेनेश्वररूपेण संभूतः । तत्संभवनं प्रकृतिनिमित्तेन चेत्तदा कथं तदभाव उच्यत इति चेत् । न सा पृथक्सिद्धा स्वगता स्वरूपे तन्मयी यथा दीपप्रभा रत्नज्योतिरतः स एव सा । अतः स्वयमेवोपादानं स्वस्य निमित्तमपि । तस्मात्स्वयंभूः परमात्मा स्वसृष्टानां जीवानां खानीन्द्रियाणि द्वारभूतत्वेन तद्रूपत्वात्तत्संज्ञानि पराञ्चि पराऽञ्चन्ति पराञ्चि प्राङ्मुखानि व्यतृणन्निर्ममे । तस्मात्तत्स्वमिन्द्रियं परानात्मेतरान्बहिर्भूतान्पश्यति । नान्तरात्मन्नन्तरात्मनि गुहायामवस्थिते तुरीये प्रज्ञानरूपे वर्तमानमात्मानं पश्यत्यन्तर्दृष्ट्या न साक्षात्करोति । पराङिति पाठान्तरम् । तत्स्वयोगेन पराऽञ्चति पराङ्बहिर्मुख एव भूत्वा पश्यति नान्तरात्मन् । किं तेनेन्द्रियाणि प्राङ्मुखान्येव सृष्टानि । सर्जनकाले तस्य परमात्मनः सृष्टिविस्तारापेक्षैवाऽऽसीत्तस्माद्बहु स्यां प्रजायेयेति संकल्पेन तानि तथा विस्तारानुरूपाणि सृष्टानि । ननु तदा सोऽस्मदादिवदसत्सृ-

ष्टिनिष्ठस्तदपेक्षावानिति जातं नु । न तद्गुणयोगेन तावत्तत्कृत्वा पश्चात्स्वयमेव तस्मान्निवृत्तो न जीवा इव तत्रैव निमग्नः पराङ्मुखतोऽस्ति । ननु च तदा गुणवशत्वमपि तथा जातं नु तदा कथं तत्प्रकृतिराश्रयव्यामोहिनी । यथा स तदवलम्बने शक्तस्तथा तत्त्यागेऽपि न तत्र निमित्तान्तरापेक्षावानस्मदादिवत्तेन स एव समर्थो न तथा तत्प्रकृतिरविद्येव दृढबन्धनकरी यत्र गुणास्तत्र तदनुरूपं किंचित्कार्यं संभवत्येव तदभावे कुतो गुणत्वं तेषाम् । केवले निर्गुणे तत्कार्यस्याप्यभावो न परमात्मनि तथा विज्ञेयं तेन सर्वेण सह स नित्यमुक्तोऽतो न दोषः । चेन्नान्तरात्मनि पश्यति तदा किं न्वात्मदर्शनाभाव एव । न कश्चिद्धीरो विवेकी शुद्धचित्त आस्थावानात्मनोऽमृतत्वं शुद्धेन रूपेणामृतभावमिच्छन्नावृत्तचक्षुरावृत्तं प्रत्यावृत्तं चक्षुश्चक्षुर्निष्ठं प्रज्ञानं यस्य स आचार्यप्रसादादात्मप्रज्ञानं बहिर्विषयेषु प्रविभक्तं ततः प्रत्यावर्त्यान्तरात्मनि प्रत्यगात्मानं प्रत्यञ्चति प्रत्यङ्प्रत्यङ्मुख आत्मा तं प्रत्यगात्मानमैक्षदैक्षत दृष्टवान् । तदा पूर्वमेव कस्यचिदनुभवो न भविष्यद्वर्तमानकालयोरिति नोऽधिकारिणां कालत्रयेऽपि तज्ज्ञानं वर्तत एव । श्रूयते च तथा 'तद्यो यो देवानां प्रत्यबुध्यत स स तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳ स भवति' इति । ननु सत्संकल्पेन परमात्मना पराङ्मुखत्वेनैव सृष्टानीन्द्रियाणि पुनः कथमन्तर्मुखाणि भवन्ति । सत्यं, न तत्संकल्पस्य कोऽप्यन्यथाकरणे शक्तः स्वयं तु भवत्येव नेति वक्तुमशक्यं संकल्पस्य मिथ्यात्वप्रसङ्गात् । तस्मात्तदिच्छयैव संभवति नास्येच्छया किंचित् । कथं सृष्टाञ्जीवानविद्यावृतान्गुणतत्कर्मबद्धान्संसारसागरे पतितान्वीक्ष्य तेषामात्मरूपप्रकाशनेनोद्धरणेच्छया वेदांस्तत्रोक्तसत्कर्मादिसाधनानि निर्ममे । तद्योगेन तमाराध्य तत्प्रसादादवाप्तपराविद्ययेन्द्रियाणां पुनरन्तर्मुखप्रवृत्तिर्भवति नास्येच्छया । ननु कुतस्तदा परमात्मनः सर्वज्ञत्वं, यथा कश्चित्पुमान्प्रयोजनान्तरमुद्दिश्य तदनुरूपं कार्यं विदधाति । अग्रे तदेव प्रतिकूलं दृष्ट्वा पुनरन्यथा करोति । असर्वज्ञत्वात् । न सर्वज्ञे परमात्मन्येवं वक्तुमुपपन्नम् । पूर्वं सृष्टिविस्तारापेक्षया जीवानामिन्द्रियाणि सृष्ट्यभिमुखान्येव कृतान्यग्रे मोक्षविषये तत्प्रतिकूलं विज्ञाय पूर्वकृतमात्मसंकल्पमन्यथा कृत्वा तान्येवान्तःप्रवृत्तिपराणि व्यधायि तदा कथं तत्सर्वज्ञत्वम् । नानेन प्रयोजनेन पर-

मात्मनः सत्संकल्पित्वं सर्वज्ञत्वं च हीयते । कथं सृज्यमानानां जीवानां प्रवृत्तिः प्रपञ्चाभिमुखैव भवतु न कदाऽप्यन्तर्मुखेति न तन्मतिरासीत् । तदा किं नान्तर्मुखत्वमेषामिति चेत् । संकल्पस्तु बहुस्यां प्रजायेयेत्येव । तदा कारणभूतस्य परमात्मनः प्रपञ्चाभिमुखत्वमासीत्सर्जनकालप्राप्तत्वात् । तेन सृष्टा अपि जीवाः प्रायः प्रपञ्चाभिमुखा एव बभूवुः । अन्तःप्रवृत्तिस्तेषां कदाऽपि न भवेदेवेति न । एवं चेत्तदा किमेवमुच्यते ' कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ' इति । तस्मात्कर्मोपासनादियोगेनाऽऽराधितपरमात्मप्रसादादन्तःप्रवृत्तिरपि संभवत्येवातो न दोषः ॥ १ ॥

एवं सति—

पराञ्चः कामाननुयन्ति बालास्ते<br>
मृत्योर्यन्ति विततस्य पाशान् ।<br>
अथ धीरा अमृतत्वं विदित्वा<br>
ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

पराऽञ्चन्ति पराञ्चः प्राङ्मुखा बहिर्मुखा अत एव बाला बालबुद्धयः कामान् काम्यन्ते कामा विषयास्ताननुयन्त्यनुलक्ष्य गच्छन्ति ते पराञ्चो बालाः कामाननुयन्तो विततस्य विस्तीर्णस्य सकरणदेहद्वयं व्याप्य वर्तमानत्वात् । मृत्योर्मारकस्य रजस्तमोगुणोद्भवस्यासुरस्वभावस्य पाशान् । स एव स पाप्मा यदेवेदमप्रतिरूपं वदतीत्यादिनोक्तान्मृत्युस्वरूपानेव यन्ति । यथा तृणासक्ता इतस्ततो विचरन्तो मृगा व्याधेन विस्तृतान्पाशान्यन्ति तत्र सिताश्च भवन्ति तथा ते काम्यनिषिद्धकर्मपाशेषु बद्धा भवन्ति । संचितप्राचीनाक्रियमाणाभिवृद्धया न तत्पाशाद्विमुक्तिः सहसा तेषाम् । अथशब्दोऽनन्तरारम्भार्थः । धीरा विवेकिनो नित्यानित्यवस्तुविचारज्ञा अमृतत्वमात्मनोऽविनाशिस्वरूपत्वं सदाचार्यप्रसादाद्विदित्वेहास्मिन्संसारेऽध्रुवेषु कालाधीनत्वेनानित्येषु देहेषु स्त्रीपुत्रादिरूपेषु ध्रुवं नित्यमवस्थानमहंममतायोगेन न प्रार्थयन्ते वाञ्छन्ति ॥ २ ॥

तत्सत्तयैव सर्वं व्यवहरतेऽतो न तदतिरिक्तं किंचिदिति दर्शयितुमाह–

येन रूपꣳ रसꣳ गन्धꣳ शब्दꣳ स्पर्शाꣳश्च मैथुनान् ।<br>
एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत् ॥ ३ ॥

येन स्वेन यदिन्द्रियपञ्चविधेन पुमान्रूपं रसं गन्धं शब्दं मैथुनान्मिथुनेषु जातान्स्पर्शान्विजानाति । पञ्चसु विषयेषु स्पर्शा एव मैथुनाः

परस्परयोगसंभवत्वात् । न तथा शब्दादयो दूरत एवानुभूयमानत्वात् । ननु रसज्ञानं तु रसनासंयोगेन भवति । या स्थूला सा कर्मकरणान्तःपातिनी सूक्ष्मा त्वन्तर्वर्तिनी भिन्नैव । तदेतेनैवाऽऽत्मना पूर्वोक्तेन विजानाति । स एवाविद्योपाधियोगेन प्रत्यक्चैतन्यत्वं प्राप्य हृद्यवस्थाय स्वप्रज्ञाप्रकाशेन श्रोत्रद्वारेण शब्दं बहिर्भूतं विजानाति त्वचा स्पर्शं चक्षुषा रूपं रसनया रसं घ्राणेन गन्धम् । विचारितमत्रास्मिञ्शरीरे तं विना किं परिशिष्यते परिशिष्टं भवति । तस्मात्तत्कर्तृकरणरूपमेतद्वा एतदेवोपक्रान्तं परं ब्रह्मैवास्ति । तथा विषयजातं स्वस्थूलमप्येतदेवैकमवस्थाजनितत्वात्स्वप्नप्रपञ्चवत् ॥ ३ ॥

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥४॥

स्वप्नान्तं स्वप्नावस्थां जागरितान्तं चेत्युभावन्तौ येन प्रत्यगात्मनाऽनुपश्यति । अविद्यातत्कार्यगुणतत्कृतदेहादिसर्वनिरासेन तमेवाऽऽत्मानं महान्तं पूर्णं विभुं सर्वाधिष्ठानं सन्मात्रं मत्वा ज्ञात्वा धीरो विवेकी न शोचति सांसारिकहानिमृत्युदर्शनेन न शोकमवाप्नोति सर्वस्य मिथ्यात्वदर्शनात् ॥ ४ ॥

किंच—

य इमं मध्वदं वेदाऽऽत्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य ततो न विजुगु-
प्सत एतद्वै तत् ॥ ५ ॥

यः पुमान्विशुद्धचित्तोऽधिकारीममुच्यमानमात्मानं मध्वदं मम पदं विश्रान्तिमपेक्ष्य तस्मिंश्चिदानन्दमये निर्विकारत्वेनावतिष्ठते न पदत्वेनेतरदात्मानमात्मभूतम् । न ममैव जीवमविद्योपाधियोगाज्जीवरूपेण सर्वत्र वर्तमानम् । अन्तिकादन्तिकं यद्यदन्तिकत्वेन वर्तते ततोऽप्यन्तरङ्गम् । कथम् , इदं स्थूलं जडं दृश्यं तेन बहिर्भूतं दर्शनाश्रय आत्मा ततोऽन्तरङ्गः । तल्लिङ्गमपि पञ्चविंशतिवृत्तिरूपं तेन ज्ञेयं ज्ञानाश्रयाद्बहिर्भूतं तत्कारणं कारणशरीरं तमोरूपमपि प्रज्ञानेन ज्ञायते तस्मात्प्रज्ञानं तदन्तरङ्गं ततोऽपि प्रज्ञाता तदाश्रयत्वात् । तस्मिन्नपि सत्तारूपत्वेन वर्तमानं ज्ञानज्ञेयसापेक्षितस्य तस्य परित्यागादात्मत्वेनानुभूयते ततोऽन्य-

त्किमन्तरङ्गम् । एवमपि भूतभव्यस्य भूतस्य पौर्वकालिकस्य भव्यस्योत्तरकाले भविष्यतो भवतश्चेशानमीष्ट ईशानस्तमीशानं नियामकं मायोपाधियोगादीश्वररूपेण वर्तमानम् । एवंरूपमात्मानं वेदोक्तप्रकारेणाऽऽत्मन्यात्मत्वेन निर्विकल्पतयाऽपरोक्षत्वेन विजानाति ततो न विजुगुप्सते किंचिन्निन्दति । कस्मात्, एतद्वा एतदेवोक्तमात्मरूपं तद्यद्विजुगुप्स्यम् । सोऽन्वयेन सर्वात्मरूपदर्शी भवति ॥ ५ ॥

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजा-
यत । गुहां प्रविश्य तिष्ठन्तं यद्भूते-
भिर्व्यपश्यत एतद्वै तत् ॥ ६ ॥

यो यद्ब्रह्म पूर्वमुत्पत्तिकाले संप्राप्ते तपसो ज्ञानमयाच्छबलं जातमुक्तं चान्यत्र 'तपसा चीयते ब्रह्म' इति 'यस्य ज्ञानमयं तपः' इति च । निर्विकल्पत्वं परित्यज्य प्रज्ञानं स्वगतमवलम्ब्य निद्रितः प्रबुद्ध इव सविकल्पमभूत् । ततो व्यक्तमहत्तत्त्वत्रिगुणाहंकाररूपेण भूत्वा भूतपञ्चकं निर्माय तत्कार्यं ब्रह्माण्डं विरचय्यान्तः पूर्वं प्राग्जीवसर्जनादद्भ्य उदकेभ्योऽन्तरवशिष्टेभ्योऽजायत प्रथमशरीरि जातम् । उक्तं चान्यत्र 'अद्भ्यः संभूतः पृथिव्यै रसाच्च' इति । कथमद्भ्योऽजायत तदेतदैतरेयकेऽभिहितमस्ति–'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षमरीचयः पृथ्वीमरो या अधस्तात्ता आपः स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः' इति । गुहां तद्देहनिष्ठहृदयगुहां प्रविश्य तिष्ठन्तं तिष्ठत् । यद्देहचतुष्टयरूपेण वर्तमानं भूतेभिर्भूतैर्व्यपश्यत व्यदृश्यत दृष्टम् । एतद्वा एतदुक्तमात्मरूपमेव तत्सर्वजगदुत्पत्तिकारणत्वेनोक्तम् ॥ ६ ॥

या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठति या भूतेभि-
र्व्यजायत एतद्वै तत् ॥ ७ ॥

येश्वरनिष्ठा चित्प्रकृतिः प्राणेन प्राणशब्दवाच्यपञ्चविंशतितत्त्वसमूहेन स्वनिष्ठेन संभवति प्रतिसर्गमादित्यादिदेवतारूपेण व्यक्तत्वेन संभवति । अतोऽदितिरनवच्छिन्ना देवानां माता सा देवतामयी विष्ण्वादिदेवतारूपा । गुहां देवशरीरनिष्ठां प्रविश्य तिष्ठति ततो या भूतेभिर्भूतैः सर्वप्राणिरूपैर्व्यजायत विविधा जाता । एतद्वा एतदेवाऽऽत्मरूपं तत्परमात्मनि चित्प्रकृतिरूपेण वर्तमानम् ॥ ७ ॥

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो
गर्भिणीभिः । दिवे दिव ईड्यो जागृवद्भि-
र्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥ ८ ॥

जातवेदा अग्निररण्योः पूर्वोत्तररूपयोर्निहितः । तत्र दृष्टान्तः—गर्भिणीभिः स्त्रीभिः सुभृतः शोभनप्रकारेण धृतो गर्भ इव निहितः । सोऽरण्योरभिमन्थनेनोत्पन्नोऽग्निर्जागृवद्भिर्जागरितैः प्रबुद्धैर्विद्वद्भिर्हविष्मद्भिस्तत्पूजनाय हवींषि सन्त्येषां तैर्गृहीतहविर्भिर्मनुष्येभिर्मनुष्यैर्दिवे दिवे दिने दिन ईड्यः स्तुत्यो भवतीडित्वा हूयते । एतद्वा एतदेवाऽऽत्मरूपं तदग्निरूपम् ॥ ८ ॥

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।
तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥

यतश्च वायोः सूर्य उदेत्युदयं गच्छति । यत्र चास्तमदर्शनं गच्छति । प्रत्यहं हि वायुयोगेनोदेत्यस्तं गच्छति च । तं वायुं सर्वदेवा अर्पिताः प्रापितास्तदाधारेणैव वर्तन्ते तदु वायुरूपं कश्चन नात्येति नातिक्रम्य गच्छति । एतद्वा आत्मरूपं तद्वायुरूपम् ॥ ९ ॥

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

यदेवाऽऽत्मरूपं पूर्णमिहास्मिँल्लोकेऽस्ति तदमुत्रामुष्मिन्स्वर्गे लोकेऽस्ति । यदमुत्रास्ति तदिहान्वनुगतमस्ति । तस्मात्तत्सर्वाकारमपि निजाका-

रेण यथावदेव निराकारं सर्वाकारस्य निराकारत्वाद्विवर्तरूपत्वेन। एवं सति योऽनधिकारी बहिर्मुख इहास्मिन्नात्मस्वरूपे नानेव नानैकं नास्त्येव तस्मान्नानेव नानावत्पश्यति तात्त्विकभेदबुद्ध्या स मृत्योरनन्तरं मृत्युमाप्नोति मृत्वोत्पद्य यथाकर्म जीवित्वाऽन्ते म्रियते पुनरुत्पद्यत इति संसारचक्रारूढः परिभ्राम्यत्येव ॥ १० ॥

एवं सर्वत्र वर्तमानस्याऽऽत्मनो ज्ञानं कथं भवतीत्यत्राऽऽह—

मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन ।
मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥

यतस्तज्ज्ञानमुक्तप्रकारेण हृदयगुहायामेवास्ति तस्मादिदमुक्तविधमात्मरूपं मनसैवाऽऽप्तव्यं प्राप्तव्यम् । ननु मनः सत्त्वरजआत्मकं तेन कथं निर्गुणं तज्ज्ञातुं शक्यं श्रूयते च 'यतो वाचो निवर्तन्ते' अप्राप्य मनसा सह' 'यं मनो न वेद' 'अमतो मन्ता' इति । सत्यं, यत्स्वगतं प्रज्ञानं तदेव गुणत्रययोगेणान्तःकरणादितत्त्वरूपेण जातमत एवोच्यते 'सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इति । यद्गुणप्रधानं तद्रूपं न तेनाऽऽत्मा ज्ञातुं शक्यः । सर्वगुणाविलयेन यन्निर्विकल्पं स्वरूपे तदाकारत्वेन वर्तमानं तेनाऽऽत्माऽऽत्मत्वेन ज्ञातव्यः । इहास्मिन्विशुद्धेऽनुभूयमान आत्मनि किंचन किंचिदपि नाना नानाकारेण भासमानं नास्ति । विवर्तरूपस्यास्याधिष्ठानदृष्ट्या भानं कुतः । एवं सति य इह नानेव पश्यति स मृत्योर्मृत्युं गच्छतीत्येतदुक्तार्थम् ॥ ११ ॥

अथान्तर्मुखप्रवृत्तिनिमित्तं तस्य सोपाधिकरूपमुच्यते—

अङ्गुष्ठमात्रः पुरुषो मध्यमात्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सत एतद्वै तत् ॥१२॥

अङ्गुष्ठश्चतुरङ्गुलः स प्रमाणमस्याङ्गुष्ठमात्रोऽङ्गुष्ठप्रमितः । पुरुष इदं शरीरं यः पिपर्ति पालयति स्वप्रज्ञाप्रकाशेन पूरयति च स तेन पुरुषः । आत्मनि देहे मध्यं हृत्पुण्डरीकं तिष्ठत्यधितिष्ठति । हृत्पुण्डरीकस्यान्तराऽवकाशोऽङ्गुष्ठमात्र एवास्ति तन्निष्ठत्वात्सोऽपि तावानेवास्ति । स शुद्धेनाऽऽत्मरूपेण भूतभव्यस्येशानोऽतो ज्ञातव्यः । विज्ञाते तस्मिंस्ततो न विजुगुप्सते न किंचिन्निन्दति सर्वस्य तद्रूपत्वदर्शनात् । एतद्वा आत्मरूपं तत्पुरुषरूपम् । यस्य मनो विषयसङ्गात्प्रत्यावर्त्य शरीरासङ्ग-

त्वेनान्तर्नीतं तस्मिन्दहरे निरवलम्बत्वेन निश्चलं न तिष्ठेत्तेन प्रथममङ्गुष्ठमात्रपुरुषचिन्तनं तत्र कृत्वा तेन मनो वशं विधाय पश्चात्तदवलम्बपरित्यागेन निरवलम्बनिष्ठत्वं प्राप्योक्तप्रकारेणाऽऽत्मा वेदितव्यः ॥ १२ ॥

यस्यान्तर्मुखस्यापि तस्मिन्व्योम्न्यन्धकार एव विभाति न प्रकाशस्तेन किं कार्यं तदुच्यते—

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत्॥१३॥

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः स्वप्रकाशोऽस्ति । ईशानो भूतभव्यस्य स एवाद्यास्मिन्वर्तमानकालेऽस्ति स उ स एव श्वः परेद्युरुत्तरकाले भविष्यति न तस्य कालत्रयेऽप्यभावः । एतद्वै तत् । एवमन्तर्ज्योतिर्विचिन्तनेनान्धकारनिवृत्त्या प्रकाशमुपलभ्य तदवलम्बपरित्यागेन यथापूर्वमात्मानमनुभवेत् ॥ १३ ॥

एवमात्मानं विजानतोऽविजानतश्च का गतिरित्यत्राऽऽह—

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥

यथोदकं दुर्गे दुर्गम उच्चैः प्रदेशे वृष्टं पर्जन्येन सत्पर्वतेषु प्रवणेषु निम्नेषु प्रदेशेषु प्रपथेष्विति पाठान्तरम् । प्रपथेषु प्रशस्तेषु पथिषु विधावति विशेषेण धावति । एवं तथाऽशुद्धचित्तो मन्द आत्मानं पूर्णब्रह्मणः पृथग्भिन्नं धर्मांश्चाऽऽचर्यमाणानात्मनो लोकांश्च प्राप्यान्पृथक्पश्यन्विजानन्केवलभेदबुद्धिर्ये पूर्वमाचरितास्तानेव धर्मान्वासनामयत्वेनावस्थितानन्वनुलक्ष्य विधावति । कर्मफलभोगार्थमुच्चैः स्थानेऽवस्थितस्तत्पुण्ये भोगेन क्षीणे ततो निसृत्यान्यकर्मफलभोगार्थं प्रवतमिमं लोकं हीनतरं वा विशति । उक्तं चान्यत्र—
'नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति' इति॥१४॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

यथोदकं शुद्धं निर्मलमुदके शुद्ध आसिक्तमा समन्तात्सिक्तं सत्तादृगेव तादृशमेव तद्रूपमेव भवति हे गौतम गोतमस्य गोत्रापत्य नचिकेत एवं तथा तस्य विजानतो गुरूपदिष्टप्रकारं विशेषेण निःसंदेह-

तया जानतः सतो मुनेर्मननशीलस्य तथाऽभ्यासिन आत्मा तादृगेव पूर्णस्वरूप एव भवति पूर्वमपि तदेवाऽऽसीन्मध्य उपाधियोगादन्यथात्वमिव प्राप्तः पुनस्तदपगमे तदेवास्ति तस्माद्भेदो मृषैव ॥ १५ ॥

इति श्रीदिगम्बरानुचरविरचिते ज्ञानकाण्डे कठवल्ल्युपनिषदर्थप्रकाशे चतुर्थी वल्ली व्याख्याता ॥ ४ ॥

आत्मनः सर्वात्मकत्वविज्ञानाय पुनस्तमेवाभिप्रायं प्रकारान्तरेणाऽऽह–

पुरमेकादशद्वारमजस्य वक्रचेतसः ।
अनुष्ठाय न शोचन्ति विमुक्तश्च विमुच्यत एतद्वै तत् ॥ १ ॥

अजस्य शुद्धात्मरूपेणाजो यतोऽजोऽतोऽनादिसिद्धस्तस्य वक्रचेतस उपाधियोगात्संप्राप्तदेहस्य तद्गुणप्रधानत्वेनान्यथाज्ञानयोगाद्वक्रं चेतो यस्य तस्याऽऽत्मनः पुरं 'दह्रं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्' इत्युक्तत्वाच्छरीरमेव स्थूलं पुरम् । सोऽत्र राजेवाध्यक्षो नानाविषयभोगवानवस्थात्रययोगेण क्रीडापररूपावसथस्तत्र मुख्यं स्थानं वेश्मभूतं हृत्पुण्डरीकं ज्ञेयम् । पुरस्य द्वाराणि वर्तन्ते तथेदमप्येकादशद्वारम् । एकादश द्वाराणि यस्य तत्तथा कानि तानि द्वे श्रोत्रे द्वे च नेत्रे द्वे च नासे एका च रसनाऽधश्च द्वे गुदोपस्थावेकं च त्वग्रूपं स्पर्शज्ञानद्वारमिति दश द्वाराण्येकं च ब्रह्मरन्ध्रमित्येकादश द्वाराणि । तद्द्वारेण ज्ञानस्य बहिरागमनं विषयाणां च सूक्ष्माणामन्तः प्रवृत्तिर्भवति । एवं तदात्मनः पुरमनुष्ठाय न शोचति न शोकं सांसारिकं प्राप्नोति । विमुक्तश्च विमुक्त एव शुद्धस्वरूपेण तथाऽपि विमुच्यते संप्राप्ताविद्यावरणानिरासेन प्रविमुक्तो भवति । उक्तं चान्यत्र 'ब्रह्मैव सन्ब्रह्माप्येति' इति । ननु सर्वेषामपि तत्पुरानुष्ठानं वर्तत एव नु(न) कुतस्तेषां विशोकत्वं विमुक्तिश्च । सत्यं, सर्वैरधिष्ठितमेव तथाऽपि न तेषां पुरस्य ज्ञानं तत्रत्यानां स्थानानां मुख्यं हृत्पुण्डरीकरूपमात्मनो नित्यनिवासस्थानं तस्यापि तदध्यक्षस्याऽऽत्मनोऽप्यन्यथाज्ञानप्रधानत्वेन तदात्मत्वेनैव मन्यमानास्तेनाहंममत्वयोगेन स्त्रीपुत्रवित्तपदार्थवियोगे शोचन्ति यथा राजा स्वप्नावस्थायामन्यथाज्ञानयोगेन स्वपदमात्मनो वैभवं च विस्मृत्य तत्रत्यं विपरीतं दुःखजनकं भावं यथार्थत्वेन मन्वानः शोचति । ततो यथाकालं तामवस्थामुल्लङ्घ्य प्रज्ञानावलम्बनेन जागरितो भवति तदा प्रति-

कूलभावापगमेन बन्धनाद्विमुक्तः पुनः स्वपदेऽवस्थितो न शोचति । तथाऽयमप्यधिकारी जन्मान्तरकृतेशाराधनयोगेन सद्गुरुणा प्रबोधितो लब्धप्रज्ञानेन देहात्मभावं त्यक्त्वा तदेकादशद्वारं पुरमिवाऽऽत्मनोऽसङ्गं दृश्यं जडं तेन विजातीयमात्मा तु प्रज्ञानवांस्तत्साक्षी नित्यं हृत्पुण्डरीकान्तराकाशनिष्ठः क्रीडार्थं जागरामवलम्ब्य नेत्रस्थाने निष्ठाय बाह्यप्रपञ्चमनुभवामि तत्रत्यांश्च विषयान्भुञ्जे तथा स्वप्ने कण्ठस्थानमवलम्ब्य तदवस्थाजनितं प्रपञ्चं पश्यामि सुषुप्तिसमये च विज्ञानेन स्वगतेन करणनिष्ठं विज्ञानमादाय पुरीतति स्वपिमि तस्मादहं सावस्थप्रपञ्चस्य तस्य साक्षी तुरीय इति विज्ञाय तेन श्रान्तः श्रमनिवृत्तये तद्भावावलम्बं त्यक्त्वा तस्मिन्निजवेश्मन्यन्तर्योम्नि तत्सापेक्षितद्रष्टृत्वपरित्यागाज्ज्ञानाज्ञानपरिलोपेनाऽऽत्मनि निर्विकल्पत्वेन चिदानन्दमयत्वेन स्वपदे तिष्ठति तदा स्ववैभवविज्ञानेन सांसारिकसङ्गविमुक्तो न शोचति । अन्यस्तु शोचत्येव । एतद्वै तत्पुरादि सर्वम् ॥ १ ॥

किंच—

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता<br>
वेदिषदतिथिर्दुरोणसत् । नृषद्वर-<br>
सदृतसद्व्योमसदब्जा गोजा ऋतजा<br>
अद्रिजा ऋतं बृहत् ॥ २ ॥

स पूर्ण आत्मा हंसो हन्ति गच्छति सर्वदा हंस आदित्यः सञ्शुचिषच्छुचौ द्युलोके सीदति तिष्ठति शुचिषत् । वसुर्वसति सर्वत्र वसुर्वायुः सन्नन्तरिक्षसदन्तरिक्षे सीदति होता जुहोति ददाति देवेभ्यो हविर्यथाभागं होताऽग्निः सन्वेदिषत् , वेद्यां संस्कृतभूम्यां स्थण्डिले सीदति । उक्तं चर्षिणा ' यो होताऽऽसीत्प्रथमं देवजुष्टः ' इति । अतिथिरतति गच्छति सततमतिथिः सन्दुरोणसद्दुरोणेषु गृहेषु गृहिणां शुचीनां सीदति । नृषन्नृषु मनुष्येषु गुरुरूपेण सीदति । वरसद्वरं सर्वस्माद्विद्याजातात्परविद्यारूपं तस्मिन्सीदति । ऋतसदृतं वेदाद्यपरविद्यारूपं तस्मिन्सीदति । व्योमसद्व्योम्न्याकाशे त्रिविधे सीदति । अप्सु जायतेऽब्जाः । गवि पृथिव्यां जायते गोजाः । ऋते दिवि जायत ऋतजाः । अद्रिषु पर्वतेषु जायतेऽद्रिजाः । इति हंसाद्येतदृतं सत्यं बृहद्ब्रह्म ॥ २ ॥

यस्माद्यद्विज्ञानाच्छोकनिवृत्तिर्मोक्षश्च तस्मात्—

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

यः प्राणमूर्ध्वमुन्नयत्युद्गमयति । अपानं प्रत्यक्पश्चादस्यति क्षिपति । तं प्राणापानयोर्मध्ये वामनं ह्रस्वं चतुरङ्गुलप्रमिताङ्गुष्ठमात्रमासीनमुपविशन्तं विश्वे सर्वे देवा उपासते परमानन्दावाप्तये तन्निष्ठत्वेन सेवन्ते ॥ ३ ॥

तद्विज्ञानप्राप्त्यनन्तरं पुरस्य तत्स्वामिनश्च का गतिरित्यत्राऽऽह—

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥ ४ ॥

अस्योक्तविधात्मोपासनापरस्य शरीरस्थस्य देहिनो विस्रंसमानस्य प्रारब्धकर्मक्षयेण संप्राप्तजरया विशेषेण स्रंसमानस्य ततो देहाद्विमुच्यमानस्य तत्पातादूर्ध्वं किमत्र परिशिष्यते न किंचित् । तस्य शरीरं भौतिकं निजकारणं भूतपञ्चकमप्येति । तथाऽध्यात्मकरणसंघोऽपि निजेऽधिदैवतरूपे संक्रामति । उक्तं च 'वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते ' इति । अत्राऽऽकाशशब्देन परं ब्रह्मैव विज्ञेयमाकाशशरीरं ब्रह्म खं ब्रह्मेति । एवं मुण्डकेऽपि 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति ' इति । तस्मान्नात्र किंचिदवशिष्यते तस्य । यथा घटोपाधिभङ्गे तच्छकलानां मृदेव गतिराकाशस्तु तत्संबन्धी सर्वगते व्योम्नि तिष्ठति तथाऽस्य गतिः । एतद्वै तत्रावशिष्टं पूर्णं तदुच्यमानमात्मरूपं विज्ञेयं न भेदः ॥ ४ ॥

यस्मादात्मन उत्क्रमणेन देहस्य मरणं तस्मात्—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेता उपाश्रितौ ॥ ५ ॥

कश्चनायं देहो न प्राणेन मर्त्यो मृत्युसकाशाज्जीवति । तथा नापानेन मर्त्यो जीवति । इतरेण तु यस्तदितरः प्रज्ञानवान्स्वप्रज्ञाप्रकाशेनेदं व्यापारे प्रवर्तयति निवर्तयति च । तथाऽप्यसङ्गः प्रदीपवत्तेनैव जीवन्ति देहाः । यस्मिन्नात्मन्येतौ प्राणापाना उपाश्रितौ यमुपाश्रित्य वर्तेते ।

विज्ञानयोगेन तस्मिन्परे ब्रह्मणि तन्मयत्वेन गते । यद्वा कर्मयोगेणोर्ध्वं गते कुतः प्राणापानयोरवस्थितिस्तदभावे च शरीरस्यापि ॥ ५ ॥

पुनस्तदेव विस्तरज्ञानायोच्यते—

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥

हन्तशब्दो वाक्यारम्भार्थः । इदमिदानीमेव वक्ष्यमाणं गुह्यं गोप्यतमं सनातनमनादिसिद्धं ब्रह्म ते तुभ्यं प्रवक्ष्यामि । हे गौतम नचिकेतो यथा च येन प्रकारेण मरणं प्राप्य प्रत्यगात्मा पूर्णो भवति तं प्रकारं ते प्रवक्ष्यामि ॥ ६ ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥

अन्ये वक्ष्यमाणेभ्य इतरे देहिनो यथा यादृशं कर्म तथा योनिं शरीरत्वाय शरीराणि सन्त्येषां शरीराः शरीरिणस्तेषां भावः शरीरत्वं तस्मै शरीरत्वं प्राप्तुं प्रपद्यन्ते प्रगच्छन्ति । अन्ये तेभ्य इतरे यथाश्रुतं तथा स्थाणुं स्थिरतरं यतो न निवर्तन्ते । एवंभूतं ब्रह्मानुसंयन्त्यनुक्रमेण समीचा प्रकारेण गच्छन्ति ॥ ७ ॥

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ॥८॥

यः पूर्वोक्त एषोऽन्तःशरीरे वर्तमानः पुरुषः सुप्तेषु सर्वकरणेषु सत्सु जागर्ति प्रज्ञानवान्स्वप्रकाशस्तेनासुप्तः कामं कामं स्वप्नावस्थायोगेन काम्यते काम्यते कामः कामस्तं निर्मिमाणो निर्मिमीते निर्मिमाणः सञ्जागर्ति । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते स हि कर्ता ॥ ८ ॥

कथं स शुद्धस्वरूपेण तदाह—

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः
श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥९॥

तदेव शुक्रं यच्छुक्रं शुद्धं स्वप्रकाशं प्रज्ञानं येनावस्थात्रयसाक्षित्वं तुरीयेऽपि प्रकाशो यस्य निर्विकल्पत्वेन स्वरूपे शुद्धे वर्तमानं तत्प्रकाश-

कत्वेन तत्तदेव । तद्ब्रह्म परं तस्य तदपृथग्रूपत्वात् । तदेवामृतमविनाश्यु-च्यतेऽतोऽन्यदार्तम् । तस्मिन्पूर्णे सर्वगते सत्तारूप आत्मनि सर्वे ब्रह्मभु-वनादयो लोकाः श्रितास्तमेवाऽऽश्रित्य वर्तन्त उत्पत्तिस्थितिलयकालेषु तदपृथक्सिद्धा विवर्तरूपत्वात् । कश्चन कोऽपि तद्वात्मरूपं नात्येति नातिक्रम्य गच्छति । तस्मात्तद्दूरे तद्वन्तिके तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत ईश्वरत्वादेः सर्वस्यापि तत्कार्यत्वात्तद्गतिरेव । यथा न जलातिरिक्तत्वेन तरङ्गस्य गतिरस्ति । एतद्वै तत् ॥ ९ ॥

कथं सर्वस्य तदाश्रितत्वं तदाह—

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥

यथैकोऽग्निः परमात्मना स्वसंकल्पेन सृष्ट आवरणभूतो भुवनं भवत्यस्ति सर्वमस्मिन्भुवनं ब्रह्माण्डमंशत्वेन प्रविष्टः सन्रूपं रूपं प्रति-प्राणिशरीरं प्रतिरूपो जठराग्निरूपेणानेकधा बभूव । तथैकोऽद्वितीयः सर्वभूतान्तरात्मा सत्तारूपेण सर्वत्र वर्तमानो रूपं रूपं प्रतिरूपो जीवरूपेण बभूव किं तद्रूपम् । नानाविद्या एव । कथं तासामाश्रया-ज्जीवरूपात्प्रागवस्थानम् । न तद्भेदेन सहसैव प्रतिरूपत्वं तासाम् । कथं, 'बहुस्यां प्रजायेय' इति संकल्पेन निरुपाधिकस्यांशत्वेनासंभ-वात्तत्प्रकृतिर्मायैवांशत्वेनाविद्यारूपेणानेकधा संबभूव ता आश्रयादपृ-थक्सिद्धा अतस्तदंशेन प्रतिरूपेण सहैव विभिन्नाः । यथा काष्ठोपाधा-वंशत्वेन विभिन्नेऽग्नेरप्यंशभेदो भवति तथा जीवरूपेण संबभूव । अत एवोच्यते 'इन्द्रो मायाभिः पुरुरूप ईयते, युक्ता ह्यस्य हरयः शता दश' इति । किं जीवरूपेणान्तरेव वर्तते । बहिश्चापि सर्वगतत्वेन वर्ततेऽन्तरशून्यः ॥ १० ॥

किंच—

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ११ ॥

यथैको वायुर्वहनरूपो ब्रह्माण्डाश्रयो भुवनं प्रविष्टोऽधिदैवतरूपो रूपं रूपमध्यात्मप्राणरूपेण प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ११ ॥

एवं नानाविद्योपाधिषु प्रतिरूपत्वेन वर्तमानोऽपि न तद्गुणकर्मभिर्लिप्यत इति सदृष्टान्तमाह—

> सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषै-
> र्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते
> लोकदुःखेन बाह्यः ॥ १२ ॥

यथा सूर्यः सर्वलोकस्य सर्वजनस्य चक्षुरध्यात्मरूपेण रूपप्रकाशकत्वेन सर्वचक्षुष्षु वर्तमानः । तथाऽपि चाक्षुषैः स्थूलचक्षुःसंबन्धिभिर्बाह्यदोषैर्बहिर्भवैर्दोषैः कामलादिभिर्न लिप्यते । तथैकः परमात्मा सर्वभूतान्तरात्मा सन्नपि लोकदुःखेन लोकस्य दुःखेन न लिप्यते न दुःखी भवति । यतो बाह्यो बहिर्भवः ॥ १२ ॥

परमात्मैवांशत्वेन जीवरूपस्तस्मादस्य गुहायां निहितस्य विज्ञानेनैव तद्विज्ञानं कृतकृत्यत्वमस्तीत्याह—

> एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा
> यः करोति । तमात्मानं येऽनुपश्यन्ति धीरास्तेषाꣳ
> सुखꣳ शाश्वतं नेतरेषाम् ॥ १३ ॥

य एको वशी स्वतन्त्रः सर्वभूतान्तरात्मा बाह्यश्चैकं स्वीयं रूपं स्वेच्छया बहुधा करोति कृतवान् । तमात्मानं सर्वगतं पूर्णं ये धीरा विवेकिनः शुद्धचित्ता अधिकारिणः सदाचार्यप्रसादेनानुपश्यन्त्यात्मन्यनुक्रमेण यद्यदात्मेतरत्तत्तन्निरस्य पश्यन्ति । तेषां सुखमानन्दः शाश्वतं नित्यं नेतरेषां तेभ्योऽन्येषां सुखं शाश्वतं ते यत्सुखमिति मन्यन्ते तद्दुःखान्तर्भाव्येवाशाश्वतम् ॥ १३ ॥

किंच—

> नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां विद-
> धाति कामान् । तमात्मानं येऽनुपश्यन्ति धीरास्ते-
> षाꣳ शान्तिः शाश्वती नेतरेषाम् ॥ १४ ॥

यः शुद्धात्मा नित्यानां नित्यः । यन्नित्यमिति मन्यतेऽजत्वान्मायोपाधिरीश्वरत्वं च तस्मादपि नित्यस्तल्लयोद्भवस्थित्यधिष्ठानत्वात्तेनैव

रूपेण नित्यत्वेनावस्थितत्वात् । तथा चेतनानां चेतनः । यत्सत्तयेश्वरस्येश्वरत्वं चिन्मयत्वं जीवानां च जीवत्वं स्वव्यापारक्षमत्वं च यत्प्रज्ञानेन चक्षू रूपं पश्यति श्रोत्रं शब्दं शृणोति तथाऽन्यान्यपि सर्वाणि करणानि स्वे स्वे व्यापारे प्रवर्तन्ते । य एको मायोपाधियोगादीशत्वं प्राप्य बहूनां सर्वेषां कामान्प्रार्थितानिहामुत्र च स्थितान्विदधाति निर्मिमीते । तमात्मानमुपाधिनिरासेन ये धीरा विवेकिनोऽनुपश्यन्ति गुहायामात्मत्वेन तेषां शान्तिस्तन्मयत्वेनावस्थानरूपा शाश्वती नित्याऽपुनरावृत्तिरूपा नेतरेषामज्ञानिनाम् । बन्धस्त्वविद्याकृतस्तन्निरासाभावे कुतः शान्तिरन्येषाम् ॥ १४ ॥

कथं तेषामविवेकिनां भावस्तदाह—

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।

कथं नु तद्विजानीयां किमु भाति न भाति वा ॥ १५ ॥

इतरेऽविवेकिनो जना इति मन्यन्ते किं, तदेतद्ब्रह्मानिर्देश्यं निर्देष्टुमशक्यं परममुत्कृष्टतमं सर्वातीतत्वात्सुखं सुखरूपमिति ब्रुवन्ति विवेकिनः। अहं तु कथं नु तद्विजानीयां संसारिणामस्माकं कथं नु तज्ज्ञातुं शक्यं स्यात्। यद्यपि ज्ञातुं प्रवृत्तास्तथाऽपि तद्ब्रह्मास्माकं किं भाति भायादपरोक्षत्वेन न भाति वा । इत्येवं मन्यन्ते संशयपरा एव । नैवं मन्येत तदनुभवोऽपरोक्षत्वेनास्त्येव ॥ १५ ॥

स विवेकिभिरनुभूत आत्मा किंविध इत्यत्राऽऽह—

न तत्र सूर्यो भाति न चन्द्रतारकम् ।

नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥ १६ ॥

न तत्र स्वरूपे पूर्णे सूर्यो भाति न चन्द्रतारकं चन्द्रश्च तारकाश्च चन्द्रतारकं भाति नेमा विद्युतो भान्ति । कुतोऽयमग्निः पार्थिवो मायात्सोऽपि न भाति न तत्र नानाऽस्ति किंचन तत्सर्वत्रैकरूपमेवास्ति॥१६॥

तर्हि सर्वं कुत्रास्तीत्यत्राऽऽह—

तमेव भान्तमनुभाति सर्वं तस्य

भासा सर्वमिदं विभाति ॥ १७ ॥

तमेव पूर्णमात्मानं भान्तं भाति भांस्तमनु तेनैव भाताऽन्वितं तत्सर्वं भाति । तत्रैव सर्वमस्ति तद्दृष्ट्या नैव भाति सर्वस्य विवर्तरूपत्वात् ।

यस्मात्तमेव भान्तमनुभाति तस्मात्तस्यैव भासा प्रकाशेन सर्वमिदं विभाति यथा किरणप्रकाशेनैव मृगजलस्य भानं तदप्रकाशे कुतस्तस्य ॥ १७ ॥

इति श्रीमदादिगुरुदत्तात्रेयदिगम्बरानुचरविरचिते ज्ञानकाण्डे कठवल्ल्युपनिषदर्थप्रकाशे पञ्चमी वल्ली व्याख्याता ॥

---

पुनः स एवान्वयव्यतिरेकविचारः साकल्येनोच्यते—

ऊर्ध्वमूलमवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ १ ॥

ऊर्ध्वमूलमूर्ध्वभागे मूलमस्य स ऊर्ध्वमूलमूर्ध्वमूलः । किं तन्मूलम् । सगुणस्यास्य संसारतरोर्मूलं मायागुणसाम्यमेव तस्मात्तदेव मूलं कारणत्वादूर्ध्वभागेऽवस्थितं विज्ञेयम् । अवाक्छाखोऽवागधोभागे शाखा यस्य सः । कास्ताः । ननु मूलात्स्तम्भोत्पत्तिस्ततः शाखास्तथाऽत्र कः स्तम्भः । गुणसाम्यरूपान्मूलात्प्रथमजः सकलगुणविस्तारजनकः शुद्धसत्त्वगुणः । तेन सकार्यः स स्तम्भरूप इति विजानीयात् । किं तत्कार्यम् । महामाया शरीरं तत्रावस्था सर्वज्ञसुभयाभिमानी परमात्मैतत्त्रयं शुद्धसत्त्वस्य कार्यं प्रणवस्यार्धमात्रया वाच्यं स्तम्भस्थाने विजानीयात् । ततः प्रसृताः शाखाः का इति चेत् । सत्त्वं रजस्तम इति गुणत्रयं सकार्यं शाखास्थाने विज्ञेयम् । तत्र रजसो विराट्शरीरं विश्वोत्पादनमवस्थोभयाभिमानी ब्रह्मेत्येतत्त्रयमेका शाखा । हिरण्यगर्भशरीरं स्थितिरवस्थोभयाभिमान्यात्मा विष्णुरित्येतत्त्रयं सात्त्विकं कार्यं द्वितीया शाखा । माया शरीरं प्रलयावस्थोभयाभिमान्यात्मा रुद्र इत्येतत्त्रयं तमःकार्यं तृतीया । एवंविधस्यास्य तरोः कानि पर्णानि । 'छन्दांसि यस्य पर्णानि' इत्युक्तत्वाद्वेदा एव साङ्गाः पर्णस्थाने विज्ञेयाः । यथा पर्णैर्वृक्ष आच्छन्नो वर्तते परिज्ञायते शोभते च तथाऽयं वेदैः कर्मोपासनोपपादकैरेवाऽऽच्छाद्यते परिज्ञायते शोभते च । एवंविध एष कार्यकारणान्वयेनैकरूपः संसाररूपोऽश्वत्थो न श्वः परेद्यवि तिष्ठत्यश्वत्थोऽनित्यत्वात् । सनातनश्चोत्पत्तिस्थितिलययोगेन चिरंतनः । तदेव शुक्रं यदस्य मूलं गुणसाम्यमित्युक्तं तत्प्रज्ञानरूपत्वात्स्वप्रकाशत्वेन शुक्रम् । तद्ब्रह्म तत्प्रज्ञानं ब्रह्मैव तदपृथक्सिद्धत्वात्तद्रूपमेव । अत एवोच्यते 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति । तदेवामृतमुच्यतेऽविनाशित्वात् । यदा मूलं

परं ब्रह्म तदा तत्कार्यभूतोऽयमपि ब्रह्मरूप एवास्ति न भिन्नः। उच्यते च 'सर्वं खल्विदं ब्रह्म, पुरुष एवेदं सर्वम्' इति ॥ १ ॥

पुनः किंविधं तत्—

तस्मिँल्लोकाः श्रिताः सर्वे तदु
नात्येति कश्चन। एतद्वै तत् ॥२॥

सर्वे लोकास्तस्मिन्नेवोक्तविधे परे ब्रह्मणि श्रिताः। तदाश्रितत्वेनैव सर्वमस्ति। अपृथक्सिद्धस्याधिष्ठानमात्रत्वात्। अतस्तदु कश्चन कोऽपि नात्येति नातिक्रम्य तिष्ठति सर्वात्मभूतं तदेवैकमस्ति। तस्मादेतद्वै नामरूपाद्याकारेण प्रविभक्तं जगत्तदेव परं ब्रह्म। स्थित्युद्भवलयकारणत्वात् ॥ २ ॥

स्थितिकाले तस्मिन्नवस्थितं जगत्कथं वर्तत इत्यत्राऽऽह—

यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ ३ ॥

यदिदं किंच स्थूलं च सर्वं जगत्प्राणे प्राणभूते स्वकारणे तस्मिन्निःसृतं तस्मादुत्पन्नं तत्र स्थितं सदेजति कम्पते तद्भयेनैव स्वस्वव्यपारे वर्तते। तेन कथं तत्। महद्भयं महाभयरूपं तज्जनकत्वात्। कथं वज्रमुद्यन्तमुद्यच्छत्युत्क्षिपति उद्यच्छंस्तमुद्यन्तमुद्यच्छन्तं मारणे वज्रमुद्यम्य तिष्ठन्तं पुरुषं दृष्ट्वा यथा बिभ्यति तथा भयहेतुत्वेन महद्भयमित्युच्यते। ननु तन्निर्विकारं निर्विकल्पं सर्वान्तरतममात्मरूपमेव सर्वस्यैवं सति कथं तदुक्तदृष्टान्तेन भयजनकं स्यात्। नाऽऽत्मनो भयमात्मनः। सत्यं तदेव मायोपाधित्वेन सर्वजगत्कारणभूतमीशनशीलम्। कथं वेदचतुष्टयं निर्माय तत्र कर्माकर्मविकर्मविभागं विधाय तत्फलान्यपि निर्मितवान्। तत्र कर्मणः फलं भोगमोक्षरूपम्। अकर्मविकर्मणोर्दुःखं दण्डरूपं च। कदा तद्भयनिवृत्तिरस्य स्यादिति चेत्। यावज्जन्ममरणे वर्तेते तावन्न संसारनिवृत्तिः कुतो भयस्य। कदा जन्ममरणनिवृत्तिर्भवतीत्यपेक्षायामाह—ये निष्कामा एतदात्मरूपं विशुद्धं संनिहितं विदुराचार्यप्रसादाद्गुहायामन्तः सर्वोपाधिनिरासेनापरोक्षत्वेन विजानन्ति तेऽमृता अविनाशिनस्तदेकरूपत्वेन भवन्ति जननमरणाभावात्। न तदा तद्भयं तेषाम्। द्वितीयाद्वै भयं भवति तदभावे कुतो भयम् ॥ ३ ॥

न मनुष्याणामेव तद्भयं देवादीनामपि यथाधिकारेण कर्मनियमोऽस्त्येव तदकरणे तेषामपि तद्भयमित्याह—

भयादस्याग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥ ४ ॥

अस्यास्मान्मायोपाधियोगात्परमात्मत्वं प्राप्तादात्मनो भयादग्निस्तपति तन्नियुक्तः स्वप्रयोजनसिद्धये तापं करोति तथा भयात्तपति सूर्यः। भयादिन्द्रश्च स्वप्रयोजने विषये धावति सावधानत्वेन वर्तते। भयाद्वायुश्च धावति पञ्चमोऽग्न्यादीनां पञ्चानां पूरणो मृत्युर्धावति स्वकार्ये॥ ४ ॥

यस्मादिमे देवाः संसारकार्ये नियुक्तास्तेन संसारनिष्ठा उक्तं च 'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्' इति कार्यपरास्तस्माद्भयं तेषां ज्ञानिनस्तु तद्भयं नास्ति तस्मादल्पमपि तस्तीति—

इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः।
ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते॥ ५ ॥

इहास्मिँल्लोके चेत्प्राक्पुरस्ताच्छरीरस्य स्थूलस्य विस्रसो विस्रंसनाद्विपातात्पूर्वजन्मान्तरसुकृतसामर्थ्या श्रीसद्गुरुप्रसादेनापरोक्षतया शुद्धात्मतत्त्वं बोद्धुं ज्ञातुमशकच्छक्नुयात्। ततः स पुमाञ्शरीरत्यागादूर्ध्वं स्वर्गेषु लोकेषु ब्रह्मभुवनान्तेषु बहुसुकृतसाध्येषु शरीरत्वाय तत्तल्लोकार्हदिव्यशरीरवत्त्वं प्राप्तुं कल्पते समर्थो भवति। शरीरत्वं प्राप्य तत्रत्यैः पूज्यो भवति। ननु ब्रह्मविदां गत्यभावः श्रूयते 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति' इत्येवं सति कथं कर्मिण इव तस्य लोकान्तरप्राप्तिरुच्यते। सत्यम्। योऽभ्यासवान्मनोजयी निवृत्तभावनाद्वयोऽन्ते तदनुसंधानेनैव देहं त्यजति न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्तेऽत्रैव परब्रह्मप्राप्तिरस्ति। यस्य तु सद्गुरुप्रसादेनापरोक्षत्वेनाऽऽत्मसाक्षात्कारो जातोऽग्रे प्रारब्धप्रतिकूलत्वेन न साधनं संभूतं तेन च न मनोजयस्तस्मान्नान्तकाले तद्धारणा तस्य योगभ्रष्टस्य सा गतिरुक्ताऽस्ति न संसिद्धस्येति विज्ञेयम्। एवं योगाच्चलितचित्तस्य गतिर्गीतास्वपि श्रूयते—

'अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति ॥ ५ ॥

कथमयं परलोके वर्तत इत्यत्राऽऽह—

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥ ६ ॥

यथाऽऽदर्शे दर्पणे चक्षुर्नासाद्यवयवैरात्मनो रूपं दृश्यते तथाऽऽत्मन्यात्मभावना नित्यमस्ति । विना दर्पणेन न सर्वावयवभानमतोऽत्र तद्ग्रहणम् । यथा स्वप्ने स्वप्नावस्थायां दर्पणे दृष्टात्मरूपाध्यासेन तादृशमात्मरूपं व्यापारपरं स्वजनैः परिवृतं दृश्यते तथा पितृलोके वासनामयशरीरयुक्तो मातापित्रादिभिर्नानास्वजनैरावृतस्तैः क्रीडानन्दवान्भवति । यथाऽप्सु परीव ददृशे परिदृश्यत इव तथा गन्धर्वलोके । यदप्सु प्रतिरूपं दृश्यते तत्तच्चञ्चलतायोगेन चञ्चलम् । यथा पितृलोके स्वजनावृतत्वं तथा न गन्धर्वलोके कोऽप्यात्मना दृश्यत आत्मनाऽऽत्मैवैको दृश्यते । अयं विज्ञानवांस्तेनाऽऽत्मानात्मविचारे मतिमान् । तल्लोके नाध्यात्मविद्याप्रसङ्गः । तत्स्थाः केवलविषयभोगरता एव । तस्मान्न तत्रावस्थाने मतिरस्योर्ध्वं गन्तुं कामनयाऽसु दृश्यमानप्रतिरूपवच्चञ्चलोऽतस्तथोच्यते । तत ऊर्ध्वं गतस्याग्रे ब्रह्मलोकावाप्तिरेव । तस्मिन्ब्रह्मलोके तस्य छायातपयोरिव मतिर्भवति । कथं, यथा पुंसः कदाचिच्छायायां मतिर्भवति कदाचिदातपेऽपि । ब्रह्मलोकः सर्वलोकश्रेष्ठो नित्यं तत्र वेदतदर्थवादस्तस्मादध्यात्मविद्याप्रसङ्ग एव सर्वदा । इतो गतः स योगभ्रष्टो विज्ञानवाञ्छ्रवणादिष्ववस्थापरस्तेन तद्भासे मतिरस्य संभवति कदाचिदमतिरपि । तत्र किं निमित्तमिति चेत् । प्रारब्धप्रतिकूलत्वेन दशासिध्द्यभावान्न पूर्णत्वेनास्य ब्रह्मप्राप्तिरभूत् । तदवस्थावांश्च । तद्योगप्रभावादस्य लोकान्तरप्राप्तिरासीत् । न तद्भोगवासनया । तन्म-

तिस्त्वपुनरावृत्त्या पूर्णब्रह्मप्राप्तिविषयैव सा तत्र चिरात्कल्पान्ते ब्रह्मणा सह भविता । किं तावदत्रावस्थानेन । तस्मादत्र संभूय साधनसिद्ध्या दशां गत्वा परे ब्रह्मण्यात्यन्तिकीं गमिष्यामीति कदाचित्पुनरावर्तने मतिः कदाचिद्ध्रासेऽपि तेनोक्तदृष्टान्तोऽत्र संभवति । यद्वा, आतपे प्रकाशाधिक्यं छायायां सुखाधिक्यम् । कदाचिदस्य विवेकलक्षणप्रकाशाधिक्येन शीघ्रमेव पदप्रापकयोगिकुले संभवने मतिः संभवति । कदाचित्संसारे जन्ममृत्युजराव्याध्यादिदुःखदर्शनानुस्मरणेन छायेव सुखकरं ब्रह्मलोकवासे मतिः । तस्मादयं छायातपयोरिव ब्रह्मलोके भवति ॥ ६ ॥

छायाभावान्नित्यत्वेन प्रकाशोपलब्धये साधनमाह—

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां स्मृत्वा धीरो न शोचति ॥ ७ ॥

पृथगुत्पद्यमानानां पृथगुत्पद्यन्ते पृथगुत्पद्यमानानि तेषां परस्परविलक्षणरूपाणामिन्द्रियाणां ज्ञानकर्मरूपाणां पृथग्भावं विवेकेनाऽऽत्मनो विलक्षणत्वं तानि गुणकृतानि गुणाः प्राकृता नाऽऽत्मन इति तेषामुदयास्तमयौ चोदयं चास्तमयं च तौ च यद्यस्मात्तस्य लयोद्भवसाक्षित्वेनाऽऽत्मनो नित्यस्यासङ्गत्वं स्मृत्वा विज्ञाय धीरो विवेकी न शोचति न विषयभोगवासनया शोकं प्राप्नोति । कथमत्र विवेकः । अन्तःकरणं सत्त्वात्मकं राजसध्यानाधारेण तामसं शब्दं शृणोति तामसेन वाचा कर्मकरणेन वक्त्यात्मा तत्सर्वसाक्षी तेनासङ्ग एव सदा । एवं मनःप्रभृतिष्वपि विज्ञेयम् । उक्तं च ' गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ' इति ॥ ७ ॥

इन्द्रियाणां पृथग्भावं तल्लयोद्भवसाक्षित्वं च विज्ञाय कथमात्मा विज्ञेय इत्यत्राऽऽह—

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमेव च ॥ ८ ॥

इन्द्रियेभ्यस्त्रिविधेभ्यो मनः परमन्तरङ्गं संकल्पविकल्पयोगेन तेषां प्रवर्तननिवर्तनहेतुत्वात् । तस्माद्बाह्यविषयान्बहिस्त्यक्त्वा तन्निष्ठं प्रज्ञानं ततः प्रत्यावर्त्य तावदिन्द्रियनिष्ठं कुर्यात् । ततस्तत्प्रवर्तननिवर्तनहेतु

सवृत्तिचतुष्टयं मनोऽन्तरङ्गमन्तराकाशावस्थितं विज्ञाय देहासङ्गत्वेन यो हृत्पुण्डरीकान्तराकाशस्तन्निष्ठो भवेत् । तद्दृष्ट्या स्थूलाभावेन जागराभावाद्बाह्यप्रपञ्चाभावः सर्वत्र व्योमैव विभाति । तत्राध्यासान्मनःसंकल्पयोगेन स्वप्नदृश्यप्रपञ्चवन्नानाविधं भानं विभाति तदपि बाह्यप्रपञ्चवदेवातो निरस्यम् । कथं, तस्मान्मनसः सत्त्वं विशुद्धप्रज्ञाप्रकाशवदतः प्रज्ञानरूपमेव तदुत्तमम् । अन्तरङ्गं सव्योम दृश्यमानप्रपञ्चसाक्षित्वात् । इति विज्ञाय तदवलम्बपरित्यागेन तस्मिन्व्योम्नि प्रज्ञानावलम्बेनैवाऽऽत्मन्यवतिष्ठेत । ततस्तत्र यथा भावावलम्बस्तथैवाभावावलम्बः । त्रिपुटीयोगेनावभासमानत्वात् । तेन नाऽऽत्मविज्ञानमिति ज्ञात्वाऽग्रे किं कार्यं तदुच्यते । सत्त्वात्तस्मादधिसत्त्वेऽधिसत्त्वस्य प्रज्ञानरूपस्याऽऽश्रय आत्मा प्रत्यगात्मा साक्षिभूतो महाञ्श्रेष्ठः । आश्रयत्वादन्तरङ्गश्च । इति विज्ञायाभावनिष्ठज्ञानं तदवलम्बपरित्यागेनाऽऽत्मनिष्ठमेव विदधीत । ततो ज्ञानज्ञेयसापेक्षितमात्मनि ज्ञातृत्वं, निरस्ते तद्द्वये किं ज्ञातृत्वेनातस्तदपि निरास्यम् । कथं, तस्मान्महतो ज्ञातृरूपादात्मनोऽव्यक्तं न व्यक्तमव्यक्तं ज्ञातृत्वादिभावरहितत्वात् । यन्निर्विकल्पमात्मप्रज्ञानं तदवलम्बेनैवावतिष्ठेत ॥ ८ ॥

तत आत्मनोऽपरोक्षविज्ञानाय किं कार्यं तदुच्यते—

अव्यक्तात्परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ९ ॥

अव्यक्तादुक्तात्पुरुषः सर्वासु पूर्षु पुरि शयान इव विद्यमानो निर्विकारो निर्विकल्पः शुद्धः सन्मात्ररूपः परोऽन्तरङ्गस्तदधिष्ठानत्वात् । इति विज्ञाय सदाचार्यदत्तप्रज्ञानयुक्त्या तज्ज्ञानावलम्बं परित्यज्याज्ञानान्यथाज्ञानरहितत्वेन तस्मिन्सन्मात्रे तन्मयत्वेनावतिष्ठेत । सैव समाधिः परब्रह्मात्मविज्ञानम् । कथं स पुरुषः । व्यापको व्याप्नोति सत्तारूपत्वेन सर्वान्तर्बहिरवस्थितत्वाद्व्यापकः । अलिङ्ग एव च । न विद्यमानं लिङ्गं यस्य सः । यत्र न ज्ञानं नाज्ञानमानन्दो निरानन्दोऽपि न पूर्णशून्येऽपि नानाकारं साकारमपि न प्रकाशरूपमप्रकाशरूपमपि तस्मान्नैकमपि लिङ्गं तत्र निश्चेतुं शक्यमतोऽलिङ्ग इत्युच्यते । एवं यद्यद्बहिर्भूतं तत्तन्निरस्य यद्यदन्तरङ्गं तत्र तत्र निष्ठां विधायाऽऽत्मन्यात्मत्वेनायमात्मानमपरोक्षतयाऽनुभूय जन्तुः प्राणी मुच्यते त्रिविधबन्धनात्प्रमुक्तो भवति ।

अमृतत्वं च गच्छति प्रारब्धकर्मभोगान्ते देहपातादूर्ध्वं जलप्रास्तसैन्धवखिल्यवदपुनरावृत्त्याऽविनाशिसद्वस्तुत्वं गच्छति ॥ ९ ॥

यस्मात्तदात्मविज्ञानमात्मन्येवास्ति तस्मात्—

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति
कश्चनैनम् । हृदा मनीषाऽभिक्लृप्तो य एतद्विदुरमृ-
तास्ते भवन्ति ॥ १० ॥

अस्याऽऽत्मनः शुद्धं रूपं स्वरूपं संदृशे सम्यक्प्रकारेण द्रष्टुमवस्थितं प्रति न तिष्ठति न गोचरो भवति । अतो न कश्चन कोऽप्येनमात्मानं चक्षुषा पश्यति । चक्षुषा बाह्यं रूपवदेव दृश्यते कथं सोऽन्तरङ्गो ग्राह्यः स्यात् । तर्हि केन ज्ञायते, हृदा हृदयेन हृदयमिति प्रज्ञानस्य नामधेयं तेन हृदा विगतसंचितदोषत्वाद्रजस्तमोभावरहितेन विशुद्धेनाऽऽत्मप्रज्ञानेन मनीषा मनस ईषा गतिर्मनीषा सद्गुरूपदिष्टवाक्यश्रवणाद्यदन्तर्मननं व्यतिरेकसाधनं तद्रूपा तया मनीषयाऽभिक्लृप्त आत्मन्यात्मनैव विज्ञातुमभिशक्तो नान्यथा । ये पुमांसोऽधिकारिण एतदात्मस्वरूपं यथोक्तं विदुर्जानते साक्षात्कुर्वते तेऽमृता अमृतनित्यपूर्णब्रह्मस्वरूपा भवन्ति ॥ १० ॥

अथ तेषां सा गतिरित्यत्राऽऽह—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥ ११ ॥

यदा यस्मिन्काले मनसा कर्तृरूपेण संकल्पविकल्पयोगादिन्द्रियाणां स्वव्यापारप्रवर्तनहेतुभूतेन सह पञ्च ज्ञानानि श्रोत्रादीनि ज्ञानकरणान्यवतिष्ठन्ते स्वधर्मपरित्यागात्प्रज्ञानान्तर्गतत्वेन निश्चलानि भवन्ति । बुद्धिश्च तत्प्रज्ञानमपि न विचेष्टेत ज्ञानज्ञातृत्वपरित्यागेन सुलीनैव भवेत्तदा तां परमामुत्कृष्टां यस्या न पराऽन्यैवंभूतां तां गतिं प्राप्तिमाहुः ॥ ११ ॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भाति योगो हि प्रभवाप्ययौ ॥ १२ ॥

तां स्थिरामिन्द्रियधारणां योगं योगः परब्रह्मैक्यरूपो ज्ञानयोग इति मन्यन्ते । एवं संप्राप्तयोगस्तदाऽप्रमत्तः प्रमादरहितो गलिताहंभावत्वा

न्निर्विकारो निर्विकल्पश्च भाति । मुख्यं योगलक्षणमाह—'योगो हि प्रभवाप्ययौ । प्रभवश्चाप्ययश्च तौ । आत्मनः शुद्धस्य प्रभव उद्भवोऽपरोक्षत्वेनानुभवः । अप्ययस्तदितरस्य प्रज्ञानादेः सर्वस्य व्यतिरेकवृत्त्या विलयः । स एव योगो नान्यः ॥ १२ ॥

सर्वविलयसाधनव्यतिरेकवृत्तिमकुर्वाणेन—

नैव वाचा न तपसा प्राप्तुꣳ शक्यो न चक्षुषा ॥ १३ ॥

नैव वाचा वेदशास्त्रपठनतदर्थकथनरूपया तच्छ्रवणेनाप्यात्मा प्राप्तुं शक्यः । तथा न मनसा सगुणेन संकल्परूपेण प्राप्तुं शक्यः । न चक्षुषा प्राप्तुं शक्यः । तान्यात्मेतरपदार्थज्ञानसाधनान्येव नान्तरङ्गस्य सूक्ष्मतरस्याऽऽत्मनः प्रकाशकानि भवन्ति ॥ १३ ॥

किंच—

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १४ ॥

तत्परमात्मतत्त्वमन्यत्राऽऽत्मनोऽन्यस्मिन्स्थानेऽस्ति नाऽऽत्मा भवति । आत्मा संसारी सुखदुःखवानज्ञानेनाऽऽवृतस्तत्परमं तत्त्वं सर्वोत्कृष्टमसंसारि नित्यानन्दनिमग्नं सर्वकर्तृ सर्वज्ञं कथं भवेदतस्तद्भिन्नमेवास्त्यात्मपरमात्मनोर्भेद एव तात्त्विकोऽस्तीति ब्रुवतो ब्रुवता मूढेन कथं तत्परमं तत्त्वमुपलभ्यत उपलभ्येत । तस्य तदुपलब्धिर्नास्त्येव । यथा पूर्वदेशस्थवस्तुसंप्राप्तिर्न पश्चिमदेशिनः कदाऽपि । तस्य विज्ञानमात्मन्येवास्त्युक्तं च 'ब्रह्मविदाप्नोति परं, तदेषाऽभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति । एवं सति तद्बुद्धिं विहायान्यत्र परत्वेन यन्न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा तत्कथं चक्षुषाऽवेक्षमाणेनोपलभ्येत । तथा बृहदारण्यकेऽपि तात्त्विकभेदवादिनं निन्दति 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः । ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद' इति । अस्तीत्येव तदात्मन्येवास्ति तदुपलब्धिरुक्तप्रकारेण गुहायामेवास्तीति ब्रुवतोपलब्धस्योप समीप आत्मन्येव लब्धस्य सदाचार्यप्रसादेन संप्राप्तस्य तत्त्वभावस्तत्त्वस्य भावोऽस्तित्वं प्रसीदति सच्चिदानन्दमयं परमं तत्त्वं तस्य नित्यमात्मत्वेनापरोक्षतया विभाति न त्वसन्दुःखमूलं संसारः सत्यत्वेन॥१४॥

कदा तदुपलब्धिरित्यत्राऽऽह–

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १५ ॥

येऽस्य साधकस्य हृदि श्रिता हृदयमाश्रित्य वर्तमानास्ते सर्वे कामाः सांसारिका इहामुत्र च स्थिता यदा यस्मिन्काले प्रमुच्यन्ते स्वयमेव प्रमुक्ता भवन्ति स निर्वासनो भवति । अथ तदा स मर्त्योऽमृतो ब्रह्मरूपो भवति । पूर्वमपि ब्रह्मैवाऽऽसीन्मध्य उपाधियोगादब्रह्ममानी तदपगमे पुनः पूर्ववद्ब्रह्मैव भवति । उक्तं चान्यत्र ‘ ब्रह्मैव सन्ब्रह्माप्येति ’ इति । अन्तेऽत्रास्मिन्नेव लोके ब्रह्म पूर्णं समश्नुते संप्राप्नोति । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ॥ १५ ॥

किंच—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १६ ॥

इहास्मिँल्लोके यदाऽस्य सर्वे हृदयस्य संबन्धिनो ग्रन्थयो नानाविधशास्त्रश्रवणपठनाभ्यामुत्पन्ना अनेकसंशयरूपा यद्वा केवलाज्ञानयोगेन विपरीतभावनारूपाश्चेदहं ब्रह्म तदा कथं मे जन्ममृत्यू सुखदुःखे च परिच्छिन्नत्वं चेत्यादिरूपाः प्रभिद्यन्ते स्वयमेव प्रभेदं प्राप्नुवन्ति । अथ तदा मर्त्योऽमृतो भवति । ‘अत्र ब्रह्म समश्नुते ’ इत्येतत्पूर्वस्मादाकृष्यते । एतावदेतत्परिमाणमेवानुशासनम् ॥ १६ ॥

अथोत्क्रमणकाले केन नाडीमार्गेण गतोऽयममृतत्वमेति तदाह––

शतं चैका हृदयस्य नाड्यस्तासां च मूर्धा-
नमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति
विष्वगन्या उत्क्रमणे भवन्ति ॥ १७ ॥

शतं च शतसंख्याका यद्वा शतमनन्तं भवतीति शतमनेका एका च हृदयस्य मांसपिण्डरूपस्य संबन्धिनो नाड्यः सन्ति । तासां च मध्य एका नाडी मूर्धानं शिरोऽभिनिःसृताऽभिलक्ष्योर्ध्वं निर्गताऽस्त्या ब्रह्मरन्ध्राद्गता । तया नाड्या तन्नाडीमार्गेणोर्ध्वमायन्नागच्छन्ब्रह्मरन्ध्रेण निर्गतोऽमृतत्वं मोक्षमेति । तस्या नाड्या अन्या विष्वग्विश्वतः स्वञ्चन्ति

विश्वग्विषूच्यो विश्वतो वर्तमाना नाड्य उत्क्रमणे स्वाभाविके विषये भवन्ति ॥ १७ ॥

उक्तार्थमुपसंहरन्नाह—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां
हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहे-
न्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रम-
मृतम् ॥ १७ ॥

अङ्गुष्ठमात्रोऽङ्गुष्ठप्रमाणः पुरुषोऽन्तरात्माऽन्तर्भव आत्मा सदा सर्वस्मिन्काले जनानां लोकानां हृदये संनिविष्टोऽस्ति । तमङ्गुष्ठमात्रं पुरुषमन्तरात्मानं स्वात्स्वीयाच्छरीराद्धैर्येण विवेकवैराग्यकर्मोपासनाबलेन प्रवृहेत्प्रोद्यच्छेल्लब्धाचार्योपदिष्टव्यतिरेकवृत्त्या प्रोत्पाटयेच्चतुर्विधाविद्यासङ्गप्रमुक्तं कुर्यात् । तत्र दृष्टान्तमाह—मुञ्जादिषीकामिव । इषीका मुञ्जशलाका मुञ्जे वर्तमाना तदाधारेणैव वर्तमानाऽपि काण्डभेदेन भिन्नैवास्ति तथाऽपि तामिषीकां परिपाकावस्थायां यथा धैर्येण मुञ्जात्परिवृहेत्तथाऽऽत्मा देहे वर्तमानोऽपि साक्षित्वेन सर्वदा विलक्षण एवास्ति तमात्मानं धैर्येण प्रवृहेत् । तं प्रवृढमात्मानं शुक्रं शुद्धं पूर्णचैतन्यममृतं ब्रह्म विद्याज्जानीयात् । स पूर्वमपि शुक्रममृतमेवाऽऽसीन्मध्ये किंचिदुपाधियोगेनान्यथात्वं तदपगमे शुक्रममृतमेवास्ति ॥ १७ ॥

इति मृत्युशासनमुक्त्वा कठः स्वयमाह—

मृत्युप्रोक्तं नाचिकेतोऽथ लब्ध्वा
विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्म प्राप्तो विरजोऽभूद्विमृत्यु-
रन्योऽप्येवं यो विदध्यात्तमेवम् ॥ १८ ॥

अथ तदनन्तरं स नाचिकेतो नचिकेता एव नाचिकेतो मृत्युप्रोक्तं मृत्युना प्रोक्तमेतां विद्यां योगविधिं च समाधिविधिमभ्यासविधिं च कृत्स्नं समग्रं लब्ध्वा प्राप्य । कश्चिदनधिकारी प्रोक्तं श्रुत्वाऽपि न लभते नायं तथा पूर्णाधिकारी तल्लब्ध्वा तदुक्तप्रकारेण योगं विधाय ब्रह्म पूर्णं सदा तन्निष्ठतया प्राप्तो विरजो विगतं रजो रजोगुणकार्यं यस्य स विरजो

विरजा विमृत्युर्विगतमृत्युरमृतस्वरूपत्वादमृभूत: । अन्योऽपि नचिकेतस इतरोऽप्येवमुक्तप्रकारेण विरजस्को विमृत्युर्भवेत् । क: य: पुमानधिकारी सद्गुरुप्रसादं लब्ध्वा तं कृत्स्नं योगविधिमेवमुक्तप्रकारेण विदध्यात्कुर्यात्सोऽपि दशां संसाध्यैवं विरजस्को विमृत्युर्भवेत् । विद्यादिति पाठान्तरम् । यो यस्मै शिष्यायैतं योगविधिमेवमुक्तप्रकारेण गुरुर्विदद्याद्विशेषेण स यथा विजानीयात्तथा दद्याद्ब्रूयात् । तद्वचनमेव दानम् । सोऽप्येवं भवेत् ।

ॐ तत्सदिति श्रीमदादिगुरुदत्तात्रेयदिगम्बरानुचरविरचिते ज्ञानकाण्डे कठवल्ल्युपनिषदर्थप्रकाशे षष्ठी वल्ली ॥ ६ ॥

समाप्ता कठोपनिषत् ।

